काश्मीर-संस्कृत-ग्रन्थावलिः

ग्रन्थाङ्कः १३

# षट्त्रिंशत्तत्त्वसंदोहः



काश्मीर-श्रीनगर



KASHMIR SERIES OF TEXTS AND STUDIES.
No. XIII.

# THE SHAṬH TRIMSHAT TATTVA SANDOHA

WITH COMMENTARY
BY

RĀJĀNAKA ĀNANDA.

EDITED WITH NOTES
BY

MAHĀMAHOPĀDHYĀYA PAṆDIT MUKUNDA RĀMA SHĀSTRÎ,
OFFICER-IN-CHARGE RESEARCH DEPARTMENT,
JAMMU AND KASHMIR STATE,
SRINAGAR.

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT
OF HIS HIGHNESS LIEUT.-GENERAL MAHĀRĀJA
SIR PRATĀP SINGH SĀHIB BAHĀDUR,
G. C. S. I., G. C. I. E.,
MAHĀRĀJA OF JAMMU AND KASHMIR STATE.




BOMBAY:
PRINTED AT THE "TATVA-VIVECHAKA" PRESS.
1918.





श्रीमच्छ्रीकण्ठनाथप्रभृतिगुरुवरादिष्टसन्नीतिमार्गो
लब्ध्वा यत्रैव सम्यक्पटिमनि घटनामीश्वराद्वैतवादः ।
कश्मीरेभ्यः प्रसृत्य प्रकटपरिमलो रञ्जयन्सर्वदेश्यान्
देशेऽप्यस्मिन्नदृष्टो घुसृणविसरवत्स्तान्मुदे सज्जनानाम् ॥ १ ॥

तरत तरसा संसाराब्धिं विधत्त परे पदे
पदमविचलं नित्यालोकप्रमोदसुनिर्भरे ।
विमृशत शिवादिष्टाद्वैतावबोधसुधारसं
प्रसभविलसत्सद्युक्त्यान्तःसमुत्प्लवदायिनम् ॥ २ ॥

ॐ

काश्मीर-संस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः १३

# षट्त्रिंशत्तत्त्वसंदोहः

श्रीमद्राजानकानन्दविरचितविवरणोपेतः

श्रीभारतधर्ममार्तण्ड-कश्मीरमहाराज-
श्रीप्रतापसिंहवर-प्रतिष्ठापिते
प्रत्नविद्याप्रकाश-(रिसर्च) कार्यालये
तदध्यक्ष-महामहोपाध्याय-पण्डित-मुकुन्दराम-शास्त्रिणा
उद्दिष्टकार्यालयस्थेतरपण्डितसहायेन
संगृह्य, संशोधन-पर्यायाङ्कन-विवरणादिसंस्करणोत्तरं
पाश्चात्यविद्वत्परिषत्संमताधुनिकसुगमशुद्धरीत्युपन्यासादिसंस्कारैः परिष्कृत्य
मुम्बय्यां
तत्त्वविवेचकाख्य-मुद्रणालये मुद्रापयित्वा प्राकाश्यमुपनीतः




संवत् १९७५ खैस्ताब्दः १९१८

काश्मीर-श्रीनगर





Printed by
Bhiwaji Hari Shinde at the "Tatva-Vivechaka" Press,
Nos. 1, 2, 3, Khetwadi Back Road, Bombay;
and Published by
the Research Department, Srinagar, Kashmir.

ओं नमोऽद्वैतसंविद्वपुषे क्षित्यादितत्त्वात्मने शंकराय ।

अथ

# षट्त्रिंशत्तत्त्वसंदोहः



श्रीमद्राजानकानन्दविरचितविवरणोपेतः

यदयमनुत्तरमूर्ति-
निजेच्छयाखिलमिदं जगत्स्रष्टुम् ।
पुस्पन्दे स स्पन्दः
प्रथमः शिवतत्त्वमुच्यते तज्ज्ञैः ॥१॥

इह हि स्वतन्त्रशिवाद्वयदर्शने परमेश्वरः स्वतन्त्रश्चिद्घनसंवित्स्वभावः स्वया स्वातन्त्र्याख्यया शक्त्या सततं शिवादिधरण्यन्ततत्तद्भुवनभूततत्त्वात्मना क्रीडनादिशीलत्वात् कृत्यपञ्चकविधायी, वस्तुतः क्रमराहित्येऽपि विश्वसृष्टौ आभासनमात्रसारेण पारमार्थिककार्यकारणभावेन क्रममपि उद्भावयन्, अनाख्यत्वेऽपि स्वेच्छयैव स्वात्मभित्तौ तत्तच्छिवादितत्त्वाभिख्याम् अवभासयति । तथात्वेऽपि षट्त्रिंशत्तत्त्व-



मयकुलस्वरूपपरामर्शनात् आखण्ड्येन विश्वभरितां स्वचमत्कारविमर्शसाराम् अनुत्तरानन्दघनावस्थां नोज्झति, इति वास्तवाशयावबोधनाय कश्चिन्महामाहेश्वरः परमेशशक्तिपातानुगृहीतः तत्त्वक्रमप्रक्रियाम् आर्याभिरेकविंशत्या समुपनिबबन्ध, – यदयमित्यादिना ।

अनुत्तरमूर्तेर्भगवतः परमेश्वरस्य प्रकाशघनस्वात्मैकात्म्येन अवस्थितं विश्वं सिसृक्षोः दर्पणनगरवत् स्वेच्छयैव स्वात्मनि आद्या प्रोन्मिमीलयिषावस्था शिवतत्त्वव्यपदेश्या पञ्चशक्तिनिर्भरत्वात् स्वातन्त्र्यात् चिदादिप्राधान्येन क्रमशः शुद्धाध्वनि तत्त्वसृष्ट्यवभासनम्, मायाविद्यादेः संवित्प्रकाशघनपरमशिवात् व्यतिरेकानतिरेकविकल्पैरुपहतत्वात् स्वातन्त्र्यमेव केवलं विश्वोत्पत्तिसंहरणादौ मूर्धाभिषिक्तं – तत्तदनन्तशक्तिनिचयानां क्रोडीकारित्वात्, वक्ष्यमाणेऽपि तत्तद्रूपोपग्रहणे स्वातन्त्र्यामुक्तत्वान्न प्राच्यस्वभावापायः ॥ १ ॥

---

इच्छा सैव स्वच्छा
 संततसमवायिनी सती शक्तिः ।
सचराचरस्य जगतो
 बीजं निखिलस्य निजनिलीनस्य ॥२॥

---



तस्य स्वाभिन्ना स्वतन्त्रेच्छाशक्तिरेव उद्भविष्यतो विश्वस्य स्वान्तर्निलीनत्वात् बीजभूता शक्तितत्त्वतां याति, शक्तेः शक्तिमद्धर्मत्वेऽपि न अन्यदर्शनाभिमतवत् तस्मात् व्यतिरेकः, नैष्कर्म्येण अत्र इच्छायाः स्वच्छत्वात् हृदय-विमर्श-सारोर्मिप्रभृतिभिः संज्ञाभिः तत्तद्दर्शनेषु अभिधानम् । परमेश्वर एव हि स्वैश्वर्योच्छलत्तया पूर्णाहन्ताचमत्कारतारतम्येन शक्तिदशामधिशेते, इत्यत्र आनन्दशक्तिप्राधान्यम् ॥ २ ॥

---

स्वेच्छाशक्त्युद्गीर्णं
 जगदात्मतया समाच्छाद्य ।
निवसन्स एव निखिला-
 नुग्रहनिरतः सदाशिवोऽभिहितः ॥३॥

---

तस्यैव परमेश्वरस्य स्वस्वातन्त्र्योद्भासितस्य विश्वस्य विशुद्धसंविन्मात्राधिकरण्येन स्वात्मन्येव समुल्लासनात् सदित्याख्यानात् सदाशिवतत्त्वावस्था, तत्र प्रोन्मीलितमात्रचित्रकल्पतया इदमंशस्य अस्फुटत्वात् इच्छाप्राधान्यम्, अतः स भाविनः समस्तभावराशेः सम्यक् बहिरवबिभासयिषालक्षणक्रीडारसिकत्वात् अनुग्रहनिरतस्तद्भूमिकां गृह्णाति इत्यतो निवसन्नित्युक्तम् ॥ ३ ॥

विश्वं पश्चात्पश्यन्-
इदन्तया निखिलमीश्वरो जातः ।
सा भवति शुद्धविद्या
येदन्ताहन्तयोरभेदमतिः ॥ ४ ॥

---

एवं क्रमावभासनात् विश्वस्य शुद्धसंविन्मात्राधिकरण एव स्फुटतया परामृश्यमानस्य अहमंशेऽभिषेचनात् स एव परमेश्वरः ईश्वरतत्त्वदशामधिश्रयति, अत्र वेद्यजातस्य स्फुटावभासनात् ज्ञानशक्त्युद्रेकः । आन्तरदशाया उद्रिक्तत्वात् सदाशिवावस्था, बहिर्भावपरतोद्रेकात् तु ईश्वरावस्था इत्यनयोर्विशेषः । प्ररूढभेदस्य इदन्तांशस्य समधृततुलापुटन्यायेन अहमंशस्फुरणायां शुद्धविद्यातत्त्वम् । अत्र विश्वस्य स्फुटतरं परामर्शनात् क्रियाशक्तिः प्रधाना । इयति च शुद्धस्वातन्त्र्यमेव तत्तद्वैचित्र्येण प्रस्फुरति, इति शुद्धोऽध्वा ॥ ४ ॥

---

माया विभेदबुद्धि-
र्निजांशजातेषु निखिलजीवेषु ।
नित्यं तस्य निरङ्कुश-
विभवं वेलेव वारिधे रुन्धे ॥ ५ ॥

---



अशुद्धे पुनरध्वनि परमेश्वर एव स्वात्मप्रच्छादनक्रीडया अघोरभट्टारकभूमिं मन्त्रमहेश्वररूपां गृहीत्वा दुर्घटसंपादनसामर्थ्येन मायाशक्त्या स्वतोऽन्योन्यतश्च भिन्नम् अणूनां भोगसिद्धये कलादिक्षित्यन्तं जडाजडवर्गं क्रमतोऽक्रमतोऽपि अवभासयति, तत्र भिन्नभिन्नप्रथात्मकमायीयमलेन स्वाङ्गकल्पेष्वपि जडवेद्यवर्गेषु विभिन्नतया बुद्धिरेव मायाख्यं तत्त्वं, येन तस्य निरर्गलं स्वातन्त्र्यं प्रतिहन्यते, वेलयेव अब्धितरङ्गाणां वैभवम् ॥ ५ ॥

---

स तया परिमितमूर्तिः
संकुचितसमस्तशक्तिरेष पुमान् ।
रविरिव संध्यारक्तः
संहृतशक्तिः स्वभासनेऽप्यपटुः ॥६॥

---

अविकार्यस्यापि तस्य चिदात्मनः स्वशक्तीनां संकोचनपुरःसरं शक्तिदारिद्र्यमापन्नस्य अण्वपरपर्याया पुरुषसंज्ञा, संहृतशक्तित्वेन परिमितात्मा स स्वात्मैश्वर्यमपि प्रत्यभिज्ञातुमपटुः संचरति विचित्रयोनिषु । यदा पुनः शक्तिपाततारतम्यात् विद्याभिज्ञापितैश्वर्यः स्वाङ्गकल्पमेव विश्वं प्रत्यभिजानीयात् तदा जीवच्छिवभावं प्रत्यापद्यते ॥ ६ ॥

---





संपूर्णकर्तृताद्या
बह्व्यः सन्त्यस्य शक्तयस्तस्य ।
संकोचात्संकुचिताः
कलादिरूपेण रूढयन्त्येवम् ॥ ७ ॥

---

शक्त्यन्तरक्रोडीकारिण्या स्वातन्त्र्यशक्त्यावियुक्तत्वादेव परमेश्वरस्य बहुशक्तित्वं, संकोचग्रहणादेव सर्वास्तच्छक्तयः संकुचितीभूय कलादितत्त्वपञ्चकेन प्ररोहमुपगच्छन्ति । ता यथा– सर्वकर्तृता सर्वज्ञता तृप्तिः नित्यता स्वातन्त्र्यमिति, एतत्पञ्चकं शुद्धाशुद्धभेदेन द्विधा,–परमेशविषयतया शुद्धं, संसारविषयतया तु अशुद्धम् ॥ ७ ॥

---

तत्सर्वकर्तृता सा
संकुचिता कतिपयार्थमात्रपरा ।
किंचित्कर्तारममुं
कलयन्ती कीर्त्यते कला नाम ॥८॥

---

गोपितस्वरूपत्वान्निरुद्धशक्तेः परमेश्वरस्य सर्वकर्तृताशक्तिः प्राणादिपरिमितप्रमातृभावे किंचित्कर्तृतोद्दलनात्मना



कलनेन अधःप्रक्षेपात् कलातत्त्वात्मतां याति, यद्वशात् किंचिदेव कर्तुमुत्सहतेऽणुः न सर्वत्र कर्तृत्वमिति ॥ ८ ॥

---

सर्वज्ञतास्य शक्तिः
परिमितततुरल्पवेद्यमात्रपरा ।
ज्ञानमुत्पादयन्ती
विद्येति निगद्यते बुधैराद्यैः ॥ ९ ॥

---

एवं तस्यैव सर्वज्ञताशक्तिः संकोचं गृहीतवती किंचिज्ज्ञेयमात्रपरत्वेन ज्ञानोत्पादनात् विद्यातत्त्वं, विद्ययैव बुद्धिदर्पणे प्रतिफलिता भावा विविच्यन्ते – गुणसंकीर्णतया तस्या विवेक्तुमक्षमत्वात्, तस्मात् विद्ययैव अर्थविवेकः ॥ ९ ॥

---

नित्यपरिपूर्णतृप्तिः
शक्तिस्तस्यैव परिमिता तु सती ।
भोगेषु रञ्जयन्ती
सततममुं रागतत्त्वतां याता ॥ १० ॥

---

परमेश्वरस्य नित्यपरिपूर्णतृप्तिर्नाम शक्तिः पारिमित्यं याता यत्र क्वचन उपादेयाद्यभिमते 'किंचिन्मे भूयात्' इति

सामान्येनाभिष्वङ्गमात्रादापद्यते रागतत्त्वम् । विशेषाभिष्वङ्गस्तु अस्यैव पल्लवितप्राय इति एतदेव कलाविद्ययोः प्रागुक्तयोः किंचिद्रागे निमित्तम् ॥ १० ॥

---

सा नित्यतास्य शक्ति-
निकृष्य निधनोदयप्रदानेन ।
नियतपरिच्छेदकरी
क्लृप्ता स्यात्कालतत्त्वरूपेण ॥ ११ ॥

---

अकालकलितस्य चिदात्मनो नित्यत्वाख्या शक्तिः न्यग्भावमाश्रित्य कार्योन्मुषितकर्तृत्वकलनया अणुं तुट्यादिक्रमाभासनात्मना कालेन संयोज्य कालतत्त्वव्यपदेश्या कल्प्यते, येन अयमणुः भूतादिक्रियाक्रमकलितः कालवशतामापद्यते ॥ ११ ॥

---

यास्य स्वतन्त्रताख्या
शक्तिः संकोचशालिनी सैव ।
कृत्याकृत्येष्ववशं
नियतममुं नियमयन्त्यभून्नियतिः ॥१२॥

---



स्वातन्त्र्यमेव अस्य परप्रमातुः संकुचत् नियतितत्त्वतामाभासयति, यतः कार्याकार्येषु नियमाधानात् विशिष्टे कार्ये विशिष्टं कारणमेव आदध्यान्नानियतमिति । एतेन कलादिना कञ्चुकेन आवृतोऽयं शक्तिदारिद्र्यमनुभूय कलादिमुखेनैव स्ववैभवात् प्रतिवितीर्णकिंचिदंशः पशुरित्युच्यते ॥ १२ ॥

---

इच्छादित्रिसमष्टिः
शक्तिः शान्तास्य संकुचद्रूपा ।
संकलितेच्छाद्यात्मक-
सत्त्वादिकसाम्यरूपिणी तु सती ॥१३॥

---

बुद्ध्यादिसामरस्य-
स्वरूपचित्तात्मिका मता प्रकृतिः ।
इच्छास्य रजोरूपा-
हंकृतिरासीदहंप्रतीतिकरी ॥ १४ ॥

---

अस्य शान्ताख्या शक्तिरक्षुब्धत्वात् इच्छादीनां शक्तीनां गर्भीकरणात् समष्टिरूपा, पारिमित्यग्रहणाच्च गुणानामविभागावस्था प्रकृतितत्त्वम् । गुणानामिच्छादिशक्तित्रिकेन अ-



न्वारब्धत्वात् त्रित्वं– यत्प्रक्षोभात् प्राकृतिकसर्गस्य प्रसरः । तत्र चित्तात्मके बुद्ध्यहंकृन्मनांसि साम्यावस्थामधिश्रयन्ति । अत्र तत्त्वक्रमप्रसरे शिवादिसकलान्तेषु प्रमातृवर्गेषु ज्ञानक्रियाशक्ती एव मुख्यमुपकरणं, ते एव संकुचद्रूपे ईश्वर-शुद्धविद्ये, संकुचिते विद्याकले, अत्यन्तं संकुचिते बुद्धिकर्मेन्द्रियाणि, क्रियायाः संकोचसीम्नि भूतसूक्ष्मादि इति विज्ञेयम् । अणोः रजःपरिणामिणी इच्छाशक्तिः अहमित्यभिमानलक्षणा अहंकृतिः ॥ १३–१४ ॥

---

ज्ञानापि सत्त्वरूपा
निर्णयबोधस्य कारणं बुद्धिः ।
तस्य क्रिया तमोमय-
मूर्तिर्मन उच्यते विकल्पकरी ॥१५॥

---

सत्त्वपरिणामिनी ज्ञानशक्तिरेव अर्थाध्यवसायलक्षणा बुद्धिः । तमःपरिणामिनी क्रियाशक्तिः । विकल्पकरणलक्षणं मनस्तत्त्वमुच्यते ॥ १५ ॥

---

वामादिपञ्चभेदः
स एव संकुचितविग्रहो देवः ।



ज्ञानक्रियोपराग-
प्राधान्याद्विविधविषयरूपोऽभूत् ॥१६॥

---

स एव क्रीडादिसतत्त्वो वामदेवादिपञ्चमूर्तित्वात् संकुचितो भूत्वा ज्ञानशक्त्युपरञ्जनप्रधानतया ज्ञानेन्द्रियतद्विषयशरीरतां, क्रियाशक्त्युपाधिप्राधान्यात् कर्मेन्द्रियव्यापारवत्त्वं च उपादत्ते । शक्तिपञ्चकोपादानात् करणानां पञ्चधात्वं बोध्यम् ॥ १६ ॥

---

श्रोत्रं चक्षुः स्पर्शन-
जिह्वा-घ्राणानि बोधकरणानि ।
शब्द-स्पर्शौ रूपं
रस-गन्धौ चेति भूतसूक्ष्माणि ॥ १७ ॥

---

श्रोत्रादीनि ज्ञानेन्द्रियाणि, शब्दादीनि तन्मात्राणि ॥१७

---

अयमेवातिनिकृष्टो
जातो भूतात्मनापि भूतेशः ।



गगनमनिलश्च तेजः
सलिलं भूमिश्च पञ्चभूतानि ॥१८॥

---

अत्यन्तसंकोचग्रहणात् अचिद्रूपतामवभास्य आकाशादीनि पञ्चभूतानि ॥ १८ ॥

---

श्रोत्रादिकरणवेद्याः
शब्दाद्यास्तानि वेदकान्येषाम् ।
वचनकरी वागासीत्
पाणिः स्यात्करणभूत आदाने ॥ १९ ॥

---

शब्दादिज्ञानसाधनानि श्रोत्रादिकरणानि, वचनादिक्रियासाधनानि वागादीनि कर्मेन्द्रियाणि ॥ १९ ॥

---

गमन-विसर्गानन्द-
त्रितये पादादिकं करणम् ।
गन्धवती भूमिः स्या-
दापः सांसिद्धिकद्रवास्तेजः ॥ २० ॥

---



उष्णस्पर्शमरूप-
स्पर्शो वायुरम्बरं सशब्दम् ।
षट्त्रिंशत्तत्त्वमयं
वन्दे कौलं कुलातिगं शंभुम् ॥२१॥

---

आदिना पायूपस्थौ गृह्येते । गन्धवत्त्वं भूमेर्लक्षणम्, सांसिद्धिकद्रवत्वमब्लक्षणम्, उष्णस्पर्शेन तेजो लक्ष्यते, अरूपस्पर्शो वायुलक्षणम्, शब्द आकाशस्य इति प्रत्येकं मुख्यगुणनिर्देशः । तत्त्वानामुत्तरोत्तरं व्याप्य-व्यापकभावेन भूमिर्व्याप्या जलादिशिवान्तं व्यापकानि पञ्चत्रिंशत्, एवं भूतसृष्टौ भूमौ व्योमादिगुणा व्यापकत्वेन अनुगताः सन्ति । परमशिवतत्त्वस्य सर्वत्र अनुगतत्वात् विश्वमयतदुत्तीर्णयामलकौलस्वरूपमेव भक्तानां समावेशार्हम्, इति वन्दनोपसंहारोक्त्या उपक्षिप्तम् इति शिवम् ॥

---

इति षट्त्रिंशत्तत्त्वसंदोहः श्रीमद्राजानकानन्दाचार्य-
विरचितविवरणोपेतः समाप्तः ॥

---



सद्विद्यानां संश्रये ग्रन्थविद्वद्-
व्यूहे ह्रासं कालवृत्त्योपयाते ।
तत्तत्सद्धर्मोद्दिधीर्षैकतान-
सत्प्रेक्षौजःशालिना कर्मवृत्त्यै ॥ १ ॥

श्रीमत्कश्मीराधिराजेन मुख्यै-
र्धर्मोद्युक्तैर्मन्त्रिभिः स्वैर्विवेच्य ।
प्रत्यष्ठापि ज्ञानविज्ञानगर्भ-
ग्रन्थोद्धृत्यै मुख्यकार्यालयो यः ॥ २ ॥

तत्राजीवं निर्विशद्भिर्मुकुन्द-
रामाध्यक्षत्वाश्रितैः सद्भिरेषः ।
पूर्त्या शुद्धया व्याख्यया संस्कृतः स्तात्
पूर्णो ग्रन्थः श्रेयसे सज्जनानाम् ॥ ३ ॥

तिलकम् ॥

---

श्रीशिवार्पणं भूयात् ॥

---

# THE KASHMIR SERIES
OF
# TEXTS AND STUDIES.

---



KASHMIR SERIES OF TEXTS
AND STUDIES.
No. XIV.

THE

# BHĀVOPAHĀRA

OF

## CHAKRAPĀṆI NĀTHA

WITH COMMENTARY

BY

## RAMYA DEVA BHAṬṬA.

EDITED WITH NOTES

BY

MAHĀMAHOPĀDHYĀYA PAṆDIT MUKUNDA RĀMA SHÂSTRÎ,
OFFICER-IN-CHARGE RESEARCH DEPARTMENT,
JAMMU AND KASHMIR STATE,
SRINAGAR.

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT
OF HIS HIGHNESS LIEUT.-GENERAL MAHĀRĀJA
**SIR PRATĀP SINGH SĀHIB BAHĀDUR,**
G. C. S. I., G. C. I. E.,
**MAHĀRĀJA** OF JAMMU AND KASHMIR STATE.




BOMBAY:
PRINTED AT THE "TATVA-VIVECHAKA" PRESS.
1918.





श्रीमच्छ्रीकण्ठनाथप्रभृतिगुरुवरादिष्टसन्नीतिमार्गो
लब्ध्वा यत्रैव सम्यक्पटिमनि घटनामीश्वराद्वैतवादः ।
कश्मीरेभ्यः प्रसृत्य प्रकटपरिमलो रञ्जयन्सर्वदेश्यान्
देशेऽप्यस्मिन्नदृष्टो घुसृणविसरवत्स्तान्मुदे सज्जनानाम् ॥ १ ॥

तरत तरसा संसाराब्धिं विधत्त परे पदे
पदमविचलं नित्यालोकप्रमोदसुनिर्भरे ।
विमृशत शिवादिष्टाद्वैतावबोधसुधारसं
प्रसभविलसत्सद्युक्त्यान्तःसमुत्प्लवदायिनम् ॥ २ ॥

ॐ

काश्मीर-संस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः १४

# भावोपहारः

श्रीमच्चक्रपाणिनाथविरचितः
श्रीमदाचार्य–भट्टरम्यदेवविरचितविवरणोपेतः

श्रीभारतधर्ममार्तण्ड-कश्मीरमहाराज-
श्रीप्रतापसिंहवर-प्रतिष्ठापिते
प्रत्नविद्याप्रकाश-(रिसर्च) कार्यालये
तदध्यक्ष-महामहोपाध्याय-पण्डित-मुकुन्दराम-शास्त्रिणा
उद्दिष्टकार्यालयस्थेतरपण्डितसहायेन
संगृह्य, संशोधन-पर्यायाङ्कन-विवरणादिसंस्करणोत्तरं
पाश्चात्यविद्वत्परिषत्संमताधुनिकसुगमशुद्धरीत्युपन्यासादिसंस्कारैः परिष्कृत्य
मुम्बय्यां
तत्त्वविवेचकाख्य-मुद्रणालये मुद्रापयित्वा प्राकाश्यमुपनीतः




संवत् १९७५ खैस्ताब्दः १९१८

काश्मीर-श्रीनगर

Printed by
Bhiwaji Hari Shinde at the "Tatva-Vivechaka" Press,
Nos. 1, 2, 3, Khetwadi Back Road, Bombay;
and Published by
the Research Department, Srinagar, Kashmir.

ओं नमोऽनन्तशक्तये शिवाय ।

अथ

# भावोपहारः

श्रीमच्चक्रपाणिनाथविरचितः

श्रीभट्टज्योग्देवात्मजभट्टरम्यदेवाचार्यविरचितविवरणोपेतः ।

स्वविमर्शविकचकानन-
समुन्मिषद्विषयकुसुमसंतत्या ।
करणेश्वरीभिरभितः
समर्चितो बोधभैरवो जयति ॥ १ ॥

विमर्शमय्या निजशक्तिदेव्या
विश्वप्रथाभैरवकुसपूजः ।
जयत्यकामोदितरश्मिरूप-
स्वशक्तिपुञ्जात्मजचक्रनाथः ॥ २ ॥

क्रमाक्रमक्रियाक्रान्ति-
व्यतिक्रमनिकृन्तनम् ।
देवं चक्रं श्रये क्रीडा-
क्रोडीकृतकृतान्तकम् ॥ ३ ॥

---

पं० ८ ख० पु० पुञ्जाकरेति पाठः ।

इह हि निरुत्तरनिर्निकेतनावटविटङ्कसंकलितसकलकलनाकुलं परमभैरवचक्रेश्वरसतत्त्वमवाच्यवाचकमवर्णनिर्वर्णनमनाद्यनन्तमन्तर्बहीरूपमपूज्यपूजकमपि प्रसरदाद्योद्यन्तृतावतारक्रमावतारितपञ्चवाहप्रपञ्चमयाकृत्रिमपूज्यपूजकक्रमेण प्रोत्स्फुरति इति रीतिरविगीतसुखसंप्रदायसरणिसमनुगतसर्वागमान्तरघुमघुमायमानश्रीविज्ञानभैरवादिषु स्वकण्ठेनैव भगवता निर्णीता, श्रीस्वतन्त्रभट्टारकादिषु च 'अकृत्वा मानसं यागम्' इत्यादिवाक्यैर्ध्वनिता मानसयागातिरेकिणी सर्वभावोपहृतिः, तामेव भट्टारकपादाः स्तोत्रमुखेन प्रकटयन्त आदिश्लोकेन आसूत्रयन्ति

ओं नमः सूर्यकलाजाल-
कालदेहापहारिणे ।

पं० १ ख० पु० निर्निकेतसंकेतावटेति पाठः ।
पं० २ ख० पु० कुलपरभैरवेश्वरेति पाठः ।
पं० ६ ख० पु० रवगीति इति पाठः ।



आधाराधेयपीठाय
भवायाभवदायिने ॥ १ ॥

भवाय हेलामात्रोद्भावितभवाभवाय नमः । नम इति नमः-शब्दगतवर्णद्वयवित्यासेन चतुर्थ्यन्तपदावेदिततत्स्वरूपसर्वावेदननयेन उन्मनीभावः तत्समाविष्टेन सूचितः, तेन तत्र मनो विलापयामि इत्यर्थः । कालदेहं वा कालविकल्पनोल्लासिकामीहां वा सूर्यकलाजालेन द्वादशात्मकमरीचिचयेन योऽपहरतीति तच्छीलोऽयमक्रमपदेन दर्शितः, सूरीनामकलाजालेन मध्यमधामानुवेधेन भावाभावभूम्युल्लङ्घनात्मना कालदेहापहारी महाहङ्कारात्मकमहाकालदेहमपहर्तुं शीलं यस्य स तथोक्तः । तदुक्तं

'कालीं महाकालमलंग्रसन्तीम्'

इत्यादि । ततश्च सूर्यकलाजालेन वा सूर्यकलाजालमेव वा कालदेहमपहरति इति अलंग्रासम-

पं० १२ ख० पु० देहाहंकारेति पाठः ।

हौघः प्रकटितः, न ह्यक्रमानाख्यपरचिच्चक्रेश्वरी-
समुदये कालो नाम कश्चित् उपपद्यते । तदुक्तं
मयैवाक्रमकल्लोलकारिकासु

‘ कालः कालेन काल्यश्चेत्कालः काल्येत केन वा ।
अकाल्य एव कालश्चेत्काल्य एव तथा न किम् ॥
मृत्युः स्फुरत्प्रकाशान्तर्निगीर्णो निगिरेत्कथम् ।
अस्फुरन्नप्रकाशत्वान्नान्तर्ग्राह्योऽथ वा न किम् ॥ ’

इति । तथा आधाराधेयौ षडध्वतदुत्तीर्णरूपौ भवाभवौ तत्स्थस्यैवास्य, उद्योगावभासचर्वणविलापनतदुत्तरकृत्ययोगात् पीठ इव पीठो यस्य ‘आधारध्येयपीठाय’ इति तु पाठे आधारे ध्येया शक्तिरेव तदधिष्ठानेन साधिष्ठानत्वात् पीठो यस्य तस्मै भवाय, अभवदायिने अशिवपरिखण्डनाय मोक्षप्रदाय वा नमः इत्यनेन कालदेहापहारिणा आधाराधेयपीठत्वप्रतिपादनेन सर्वात्मसात्करणलक्षणः सततोदितोऽकृत्रिमपूजाम्नय उट्टङ्कितः । अत्र अपहारिपदेन संहार उक्तः, पीठपदेन स्थितिक्रमो, भवपदेन सृष्टिः, इत्यक्रमौघः सृष्टिपर्यव-



सानेन अनेन श्लोकेन चर्चितः । चतुर्थस्य सकलक्रमाक्रमभित्तिभूतत्वात् पृथक् अनभिधानमेव ॥ १ ॥

अथ स्थितिप्रधानसृष्टिसंहारपरिघट्टनेन द्वितीयं पूजाक्रमं दर्शयति

नमः शिशुनिशाकान्त-
कलाकमलमालिने ।
परमानन्ददेहाय
शिवायाव्यक्तमूर्तये ॥ २ ॥

अव्यक्ता भवाभवस्थितिप्राधान्यात् उट्टङ्कत्वेन अप्रकटिता मूर्तिर्यस्य तस्मै शिवाय महत्यावेशेऽपि अपरिभ्रंशशीलाय । नम इति व्याख्यातम् । शिशुतया आद्या भेदस्वभावेन स्थिता या इयं निशाकान्तस्य कालरात्रीरमणस्य परभैरवस्य कलनात् कला सैव अघोरघोराघोरातिघोरावर-

पं० १० ख० पु० अटङ्कत्वेनेति पाठः ।
पं० १३ क० पु० आद्योद्भवस्वभावेनेति पाठः ।



णत्रयोपेतवर्गाष्टकदललालिता, सैव कमलं तन्मालिने तदाधाराय तदाधेयाय वा । निशाकान्तकला संहारदेवी, तथा चास्मत्पुत्रः

‘शिव शिवासनमूर्ध्नि सदा स्थिता
विगतकालकलाकलनाक्रमा ।
कृशतया क्रशिमव्यपलापिनी
जयति कापि कला विगतक्रमा ॥’

इति । वाजसनेयभट्टारिकायामपि

‘अवधूता निराचारा सर्वभूतान्तरे स्थिता ।
क्रीडत्यात्ममयैर्भावैर्बालः क्रीडनकैरिव ॥
प्रबुद्धपूर्णभावाभ्यां विभज्यात्मानमात्मना ।
अप्रबुद्धप्रबुद्धेन क्रीडार्थं भावयेद्भृशम् ॥’

इति । मालिने धारिणे' इति स्थितिः । आनन्ददेहाय इति सृष्टिः तस्या आनन्दरूपत्वात्, अव्यक्तमूर्तये इति संहारः । अयमपि सततसिद्ध एव पूजाक्रमः ॥ २ ॥

---

पं० १ ख० पु० ललितमिति पाठः ।
पं० ९ ख० पु० भावान्तरस्थिता इति ।
पं० १२ ख० पु० भावयेत्स्वयमिति पाठः ।



अथ गुणीभूतसृष्टिस्थितिरूपतृतीयचक्राक्रमपूजां प्रतिजानीते

नमः पाशौघसंघट्ट-
लयविश्लेषकारिणे ।
मन्त्रगर्भोदरस्थाय
हराय परमात्मने ॥ ३ ॥

पाशानाम्—आणवमायीयकार्मिकाणां मलानामोघः तस्य संघट्टः अहेतुकेन केनापि क्रमेण उल्लासः, तेन वा तत्र वा तस्य वा योऽयं लयः, तथा विश्लेषः पृथग्भावस्तत्करणशीलत्वेन वर्तमानाय सदा त्रितयकारित्वान्नान्तरीयकं तिरोधानानुग्रहकारित्वं ध्वनितम् । मन्त्रगर्भोदरस्थाय इत्यत्र त्रिधा गुर्वाम्नायः—मन्त्रा वर्णरूपा गर्भे यस्याः सा मालिनी मन्त्रगर्भा तदन्तर्गता तस्या उदरे वाच्यत्वेन अभ्यन्तरे तिष्ठति इति स तथा, अथ वा मन्त्राणां गर्भो मन्त्रगर्भः तदन्तर्गतः प्रथमस्वरः

तस्य उदरम् उत्तरपक्षप्रतिक्षेपेण मध्यमकला तुर्य-
र्धरूपा तत्र स्थिता, अथ वा मननत्राणधर्मित्वात्
मरीचिषु स्थित्युदितासु मन्त्र इत्यादिरूपतया
योऽयम् अनारावरावो रावसंघट्टकतया

‘ त्वामजामकृतपञ्चकारण-
द्रावणोड्डमरधामभैरवीम् ।
स्तौम्यनाहतहतव्यतिक्रम-
स्फाररावकृतवीरघट्टनाम् ॥ ’

इत्याद्यस्मद्विरचिताकुलकौलिकात्रिंशिकोक्तस्व-
रूपः तस्य गर्भे गहनम् अवटरूपं तदुदरे तद्गमनि-
कागम्ये धाम्नि तिष्ठति इति स तथोक्तः, सर्वत्र
चात्र आद्यभट्टारकोपदेश एव विराजते तस्यैव
परमात्मत्वात्, अत एवात्र भव-शिव-हर-शब्दैः
श्लोकत्रयोदितसृष्ट्याद्युपदेशचरमस्य अनाख्यस्य
सर्वान्तश्चारित्वमवाग्गोचरत्वात् सूचितमेव ।
अत्र ओघसंघट्टशब्दाभ्यां सृष्टिस्थित्योः, हरश-
ब्देन संहारस्य द्योतनेऽकृतका कापि पूजा निरू-
पितैव ॥ ३ ॥

पं० १ ख० पु० तुटिरूपेति पाठः ।



तदेवमनवच्छिन्नसततसिद्धनिरुपादानानन्ता-
नव धिकस्वरूपभूतपूजासंभवे शम्भोर्निर्गुणस्य
अनन्तगुणस्य वोपचारैरान्तरैर्बाह्यैर्वा कायिकै-
र्वाचिकैर्मानसैर्वा पूजयितुमशक्यत्वात् कोऽयं
भावोपहारो नाम इत्याशङ्क्याह

यद्यपि त्वं गुणातीतो
वाक्पतेरप्यगोचरः ।
तथाप्या हृदयात्स्तोतु-
मुद्यता वाक्सदा मम ॥ ४ ॥

अतिभक्तिरसावेश-
विवशा विश्वतो मुख ।
त्वत्प्रेरिता यतो नाथ
नापराधोऽस्ति मे क्वचित् ॥५॥

यद्यपि-तथापि-शब्दाभ्यामनुपपत्तावपि उप-
पत्तिं प्रकाशयद्भ्यामनुपपत्तिरेव सर्वोपपत्तिरिति

कापि युक्तिरुक्ता, तथाहि गुणातीतोऽपि तस्यैव विषयोऽपि तदुल्लासितेन केनापि दुर्घटघटनानयेनार्वाचीनभूमिमूर्तित्वेन विषयधाम अश्नुते। तदुक्तं तपस्विप्रबोधनाथेन

‘परतरतयापि रूपं
यद्यत्कलयामि तत्तदधरं ते।
अधरतरापि न कलना
सा काचिद्यत्र न स्थितास्यभितः॥’

इति। आ हृदयात् आ परधाम्नः पश्यन्त्यादिरूपेण सदोदितापि वैखर्यात्मना त्वयैव एतेन आद्यभट्टारकेण प्रकर्षेण ईरिता सती प्रसरति, इति मम न कश्चित् अपराध इत्यहं तत्समावेशित एवोदितः, यदि अहं नाम कश्चित् अन्यो भवेयं, भवेत् नाम अपराधो, यदि परमपराधोऽपि अहमपि भवानपि एकमेव तत्त्वं, ततश्च कोऽपराधशब्दार्थः। तदुक्तं मयैव शिवरवस्तोत्रे

‘अथ वा हृदम्बरगतेन
जनिनिधनहीनमूर्तिना।

पं० ३ ख० पु० भूमिवर्तित्वेनेति पाठः।



चन्द्रविमलमुकुटेन नुता-
वनुमोदिता मम मतिः प्रवर्तते॥’

इति। अतिक्रान्ता भक्तिरसाविभागभूमिर्येन तादृक् योऽयमावेशः सर्वतो-दिक्तन्मयतोदयः तेन विवशा विशिष्टा वशेव करेणुरिव निजबोधरसचर्वणसदावरणनिरावरणमदविघूर्णितत्वात् विश्वतः सर्वतो मुखानि यस्य स तथा, इत्यनेन एतदुक्तं भवति – न तत् वाच्यं कृत्यं वा किञ्चन यत् त्वत्परिचर्वणचारुरूपतया न चकास्ति। ततश्च सुप्तप्रलापगालिदानादिभिरपि त्वमेव स्तूयसे इत्याह ‘विश्वतो मुख’ इति विश्वत आ मुखम् यस्य इति वा। पशुकुक्कुटादिमूर्तिपर्यन्तमस्य आविर्भूतत्वमबाध्यमित्यर्थः। सर्वथापि अनुदितानस्तमितापरिमितचिदेकघनमिति प्रतिपादितम्॥ ४॥ ५॥

त्वत्पादाब्जरजःपूत-
चिताभूतिविभूषितात्।

पं० २ क० पु० ननु मतिः इति पाठः।

गृहाण मत्तः श्रीकण्ठ?
भावपूजामकृत्रिमाम् ॥ ६ ॥

श्रीर्विश्ववैचित्र्यशोभोद्भाविनी शक्तिः कण्ठे अविभागधाम्नि यस्य तस्यामन्त्रणम्, गृहाण इति संप्रदानसंप्रदेयतया त्वमेव स्फुरसि इति याच्ञार्था अकृत्रिमशब्देन सूचिता । तव पादाः पिण्डस्थादिभेदेन चतस्रोऽवस्थाः ता एव अब्जं तत्र तदुल्लासितज्ञेयकार्यवस्तु विकल्परूपं, रञ्जनात् रजः तेन पूता ततो वा पूता सद्युक्तिपरिपवनेन क्षपिता या चिताभूतिः सर्वसंक्षयपरचिद्रूपा सर्वोद्भूतिरूपा वा तया विशिष्टायां भुवि उषितात् प्रस्तोष्यमाणात् मत्तो मम सकाशात् त्वमपि मत्तो निजानन्दनिर्भरो भावपूजाम् आत्मसात्करोषीति ॥ ६ ॥

तामेव स्नानक्रमेण प्रस्तौति

हृत्पुष्कराख्ये स्नात्वान्त-
स्तीर्थे योगिनिषेविते ।



संबोधधौतवसनः
श्यामकण्ठं यजाम्यहम् ॥७॥

हृत्पुष्करं हृत्पद्मं तत्र बद्धलक्ष्यतया स्नात्वा सकलमलविधूननं विधाय, अथ वा हरतीति हृत् संहारसंहारिणीरूपम्, एतदेव हृत्पुष्करं तीर्थं सर्वचक्राणां तत्रैव परमविश्रान्तिलाभात्, तत्र सर्वविशुद्धिमादाय योगिनोऽत्र परशश्मिरूपाः, सम्यक् बोधः संबोधः तदेव धौतं सकलकालिकाविशुद्धं वसनम् अशेषाच्छादकतया वर्तमानं यस्य, इति सर्वोत्तीर्णसर्वमयतोक्तिः, श्यामकण्ठः सर्वघट्टकमहातमिस्रारूपसंकलनधामात्मिका श्यामा कण्ठे गले यस्य । यथोक्तम्

‘पानाशनप्रसाधन-
संभुक्तसमस्तविश्वया शिवया ।
प्रलयोत्सवसरभसया
दृढमुपगूढं शिवं वन्दे ॥’ (उ० स्तो० १६–२९)

इति ॥ ७ ॥

अर्घपात्रमाह

प्रभूतभूतसंभूत-
शोणितैरर्घभाजनम् ।
क्रियते ते महाकाल-
कायकंकालकन्दले ॥ ८ ॥

प्रभौ व्यापके भैरवधाम्नि ऊतानि अनुस्यूतानि यानि भूतानि पञ्चात्मकशक्तिविवर्तभूतानि पृथिव्यादीनि, तत्र संभूतानि यानि शोणितानि तत्स्वरूपविगलनसमुदितचिद्रसरूपाणि, तैरर्घभाजनं महाविमर्शमयपूजनपात्रम् एकशक्तिशुक्तिविगलनरूपं सर्वेषामविकल्पभूम्यधिरोहविदारितविकल्पमयमहाकालकलेवरकरङ्ककपाले कालसंकर्षिणीधाममध्ये विधीयते इत्यलं रहस्योद्घाटनेन ॥ ८ ॥

यद्यद्विकल्पनाजालं
बाह्यार्थप्रतिपत्तये ।



तत्तद्द्वाराधिपकुलं
तव पूज्यं मनस्विभिः ॥९॥

बाह्यविषयाक्षेपकत्वात् मनोन्मनालक्षणं द्वारं तद्वासि कुलं द्वाःस्थकुलं द्वाःस्थसमूहः, विकल्परसा एव हि स्वरूपरसावेशद्रवणेन असंविभक्ता बाह्यकक्ष्यासु क्षिपन्ति, तदनु चैवं मानितास्ते स्वरूपनरपतिसमीपमर्पयन्ति, इति स्वशक्तिभागावधानेन पूज्यं स्वीकृतमनस्कैः ॥ ९ ॥

अशेषावरणोन्मुक्त-
गुप्तसौषुप्तमण्डले ।
पूज्यसे नगजाकान्त !
ग्रहणे चन्द्रसूर्ययोः ॥ १० ॥

चमनादबाह्यत्वेन अन्तरेव चिमिचिमायमानत्वात्, द्रवणाच्च बहिर्लोकयात्रात्मना प्रसरणात्, तथा सुष्ठु ऊरणात् इति चन्द्रशब्देन सूर्यशब्देन च जाग्रत्स्वप्नयोर्ग्रहणम्, तयोर्ग्रहणे आत्मसात्क-

---

पं० ८ ख० पु० शक्तिभावावधानेनेति पाठः ।

रणे सति, अशेषावरणैः सर्वोपाधिभिः, उन्मुक्ते गुप्तसौषुप्तमण्डले गुप्तं तिरोहितं सौषुप्तं मण्डलं यत्र तस्मिन् तुरीये धाम्नि, नगजा अविचलकूटस्थधामसमुल्लसिता शक्तिः तस्याः कान्त? विश्रामधामन्, पूज्यसे सततं संबोधनेनानुभूयसे ॥ १० ॥

हानादानोदयारम्भ-
सदसद्विभ्रमोज्झितम् ।
ज्ञप्तिमात्रप्रतिष्ठान-
मासनं त्रिजगत्पते ॥ ११ ॥

त्यागग्रहोद्गमक्रियाभावाभावविकल्पनिर्मुक्तम् अत एव मातृमानमेयोल्लङ्घनेन प्रमितिमात्रं निर्विशेषेण फलरूपमासनमुपलक्षणतया तस्यापि सापेक्षत्वात् तदपि उल्लङ्घितवतोऽव्यपदेश्यस्य तव, ते निवेद्यत इति पाठे निवेद्यते निःशेषेण वेद्यते तद्भावेन अनुभूयते, त्रिजगतो मातृमानमेयलक्ष-

पं० १६ ख० पु० भावनानुभूयते इति पाठः ।



णस्य अधिष्ठातः! हानादानादिपदार्थषट्कनिर्देशात्वानपेक्षमासनं सूचितम् ॥ ११ ॥

मूर्तिदानमनाभास-
शक्तिभासोपबृंहितम् ।
तुर्यपीठप्रतिष्ठानं
वितरामि जगत्पते ॥ १२ ॥

उपबृंहितम् उपबृंहणम्, बाह्यावभासरहितानवच्छिन्नचमत्कारसारशक्त्यवभासरूपं, मूर्तेः मूर्छितसतत्त्वस्य किञ्चिदुच्छूनतात्मनः पारिपूर्ण्योल्लेखस्य दानं, वितरामि विमृशामि, पूर्णाहन्तया च परपदनिविष्टम् ॥ १२ ॥

दिक्कालदेशकलना-
कलङ्कोज्झितचेतसः ।
कः करोति बुधः स्थाणो-
राह्वानादिविसर्जनम् ॥ १३ ॥

स्थाणोः स्थास्नोरप्रचलितसर्वगतचिन्मात्रवपुषः पृथक् दिग्देशकालपरिगणनकल्पनाभावात् आह्वानोपक्रमं विसर्जनमवगततत्त्वः कः करोति, व्यतिरिक्तदेशकालसंभवे हि कस्यचिदानयनं कुत्रचित् प्रहाणं संभाव्येत, इह तु सर्वस्यैव तन्मयत्वात् कस्याह्वानं कुत आह्वानं, कस्य विसर्जनं कुत्र च विसर्जनमिति तत्समावेशेनैव सर्वसंसक्तिरुक्ता ॥ १३ ॥

सूर्यशीतांशुनेत्राभ्यां
मथित्वा शक्तिवारिधिम् ।
परामृतरसाभ्यङ्गं
शिवाय विनिवेदये ॥ १४ ॥

अभ्यज्यते अनभिव्यक्तमपि व्यक्तिमानीयते सृष्टिक्रमावद्योतिता येन सोऽभ्यङ्गः उपस्नेहकः, नेत्रे प्रथमसूत्रेऽपि ॥ १४ ॥

पं० १५ ख० पु० नेत्रमथनसूत्रे इति पाठः ।



इन्द्रियेष्विन्द्रियार्थेषु
रागलोभानुयायिषु ।
निःस्नेहत्वं प्रभुत्वं च
रूक्षमुद्वर्तनं तव ॥ १५ ॥

इन्द्रियार्थेषु शब्दस्पर्शरूपरसगन्धेषु विषयभूतेषु, इन्द्रियेषु रागलोभानुयायिषु सत्सु इति व्यधिकरणे सप्तम्यौ, निःस्नेहत्वं प्रभुत्वं चात्यन्तायुक्तिरनभिष्वङ्गस्तदधिष्ठातृत्वेन वा स्फुरणम्

'बुद्धवत्सर्वरागी स्यात्सर्वद्वेष्योऽथ भैरवः ।'

इति न्यायेन उद्वर्तनमशेषवासनोन्मूलनम् ॥ १५ ॥

संशोध्यानच्छकलया
बैन्धवं तीर्थमञ्जसा ।
तद्दिरामरसस्नानं
देयं चन्द्रार्धमौलये ॥ १६ ॥

महानादाद्यकलावचूलाय षोडशस्वररूपकला-

पं० १५ ख० पु० षोडशांशरूपकलाकलापारम्भकावर्णशिरोङ्कुशेति पाठः ।

कलापारम्भाद्यवर्णरूपशिरोङ्कुशरूपया अनच्छकलया बैन्धवं तीर्थम् उभयशून्यबिलरूपं संशोध्य निर्ग्रन्थिबन्धं विधाय, निरोधनादनादान्तवर्तिपरमतृप्तिालक्षणरसेन कार्यमभिषेचनम् ॥१६॥

स्वप्रबोधाम्बरोदार-
विकसद्वस्त्रघर्षणम् ।
विनिवेश्य भवत्संवि-
द्विकिरान्विकिरामहे ॥ १७ ॥

स्वप्रबोधः स्वविमर्श एव अम्बरम् अनावरणत्वात् व्योम अत एवोदारमुद्भटं विकसत् सर्वात्मतया प्रसरत् सोल्लासितकार्याच्छादकतया वस्त्रं तेन घर्षणं प्रत्यावृत्तिनयेन स्वावधानं विधाय, प्राप्ते महासामरस्ये, विगलितेषु द्वैतोदयमहासंत्रासडम्भरेषु अखण्डितस्वावबोधनिर्मत्सरबलीन् सर्वतोदिक्कं क्षिपामः ॥ १७ ॥

पं० १२ ख० पु० महामन्त्राडम्बरेषु इति पाठः ।



ज्ञानज्ञेयपरित्याग-
नगनिर्झरविस्रुतम् ।
परमानन्ददं मेऽन्त-
स्तव पाद्यमनाविलम् ॥ १८ ॥

उभयोरपि सापेक्षत्वेन अनुपपद्यमानस्वरूपत्वात् जडाजडयोः त्रिष्वपि कालेषु चिदतिरेकेणाभाव एव अगमनात् अविचलत्वात् नगः तत्र यो निर्झरो निर्गतो झरो वयोहानिरूपः कालः यस्मात् तादृक्स्वरूपं ततः प्रवृत्तं परचमत्काररूपं पाद्यम् 'झॄष्-वयोहानौ' इत्यस्य झर इति रूपम् 'ऋदोरप्' ॥ १८ ॥

अमन्दानन्दनिःष्यन्द-
स्पन्दमन्दिरकन्दरात् ।
गलत्कैवल्यसलिल-
मादत्स्वाचमनं विभो ॥ १९ ॥

गुणादिस्पन्दनिःष्यन्दिषु यत् सामान्यस्प-



न्दरूपम्, अक्रमप्रकटितनिमेषोन्मेषसृष्टिस्थितिप्रकारम् ईषदुच्छूनतया किंचिच्चलनात्मकमपि तदेव मन्दिरं सर्वस्य प्रथमनिवासित्वात्, अमन्दोऽनवच्छिन्न आनन्दनिःष्यन्दोऽहमित्युल्लेखचमत्कारप्रसरो यत्र तादृशस्पन्दमन्दिरस्य कन्दरात् अगाधात् धाम्नः, उन्मिषदनन्यत्वरसरूपमाचमनं गृहाण कैवल्यरसमपि संहर, इति कोऽपि बन्धमोक्षोत्तीर्णो नय उन्मीलितः 'मन्दरकन्दरात्' इति वा पाठः ॥ १९ ॥

प्रक्षाल्य धारणाम्भोभि-
ग्रैन्थिपञ्चकमौक्तिकम् ।
अनर्घ्यमर्घं पादेभ्यः
प्रयच्छामि वृषाकपे ॥ २० ॥

हे वृष स्वशक्तिरसवर्षणप्रवण! तथा अकपे अचपल—कूटस्थ! ग्रन्थिपञ्चकम् इन्धिका-दीपि-

पं० ३ ख० पु० निवासत्वात् इति पाठः ।



का-रोचिका-मोचिका-ऊर्ध्वगालक्षणं, मनोग्रथनात् धारणा वारुण्याद्या देशबन्धरूपाश्चित्तस्य ता एव अम्भांसि तैरष्टोत्तरशतसंख्यातान्तिकमुख्यसंप्रदायसिद्धिभूमिकोलङ्घनक्रमेण अमलतामासाद्य, अनर्घ्यममूल्यम्—अतुल्यत्वात् ॥२०॥

तुरीयोद्यानविकस-
त्संवित्सौरभनिर्भरैः ।
गिरीश तिसृभिर्वाग्भिः
स्तुतिपुष्पैः प्रपूज्यसे ॥ २१ ॥

गिरि वाग्विषये ईश स्वामिन्, तुरीयोद्याने परास्वरूपकानने विकसत् यदेतत् संवित्सौरभं बोधामोदः तन्निर्भरैः, स्तुतिरूपैः पुष्पैः, तिसृभिर्वाग्भिः पूज्यसे। तत्र पश्यन्त्याः तावत् स्वरूपाव्यतिरिक्तान्तास्फुटतेदन्ताहन्तावभासपरमसामरस्यरूपा स्तुतिः, मध्यमाया अपि ग्राह्यग्राहकाकल्पकल्पनानल्पस्फुरत्तातात्पर्यपर्यवसितोऽपि

अविलुप्तस्वावभासस्तव स्तवस्तवकः, वैखर्यास्तु मौखर्येण स्फुटघटपटादिनटनलाम्पट्येऽपि सर्वतोदिक्प्रथितपरमेश्वररूपातिरेकिवाच्यान्तरविरहात् सततमेव तदनुशंसैव कुसुमिता मिताभिधाननिर्णयनिर्दलनतात्पर्यपर्यवसिता इत्युक्तं भवति ॥ २१ ॥

प्राणवह्निशिखास्त्रेण
भङ्क्त्वा ब्रह्मबिलं लसत् ।
धूपवर्तिनिभाभासो
धूपस्ते नगजाधव ॥ २२ ॥

प्राणोद्दीपिता येयं वह्निशिखा—आग्नेयधामकोटिः, सैव अस्तात् त्रायते इति अस्त्रम्, अथ वा निष्कलनाथोऽत्र उद्धृतः, तेनैव हिक्कापातोद्दीपितेन ग्रन्थिभेदनक्रमेण ब्रह्मग्रन्थिभेदात्, तत्र प्राणो 'ह' वह्निशिखारूपमस्त्रम् इत्यादि, सर्वप्र-

पं० ९ क० पु० धूपयन्ति निभेति पाठः ।



मेयजातं धूपयति सर्वं स्वपरिस्पन्देनाधिवासयतीति धूपः ॥ २२ ॥

अनाहता नदत्यन्त-
र्या गौर्धाम्नि परे परा ।
सा घण्टा वाद्यते शम्भो-
रग्रे ग्रन्थार्थगर्भिणी ॥ २३ ॥

अघंटसिदिति त्रोटयति इति अघण्टा, परा प्रकृष्टा, ग्रन्थार्थगर्भिणी—अन्तरितसकलवाच्यवाचककलापा ॥ २३ ॥*

कन्दानलोल्लसच्छक्ति-
शिखां दीपशिखोपमाम् ।
उद्दीपयामि भगव-
न्मोहध्वान्तापनुत्तये ॥ २४ ॥

* अस्य पद्यस्य व्याख्यानमसमञ्जसं खण्डितपूर्वभागं च प्रतिभाति द्वयोरादर्शपुस्तकयोस्तथादर्शनात् यथावदेवोपन्यस्तम् । [ परे धाम्नि द्वादशान्ते अन्तरस्फुटतया अनाहता स्वयमुच्चरन्ती या परा वाक् नदति, सा घण्टा वाद्यते इत्यन्वयेन संगतः पदार्थः ]

कन्दानलात् आधारमध्यधाम्नः उल्लसन्ती शक्तिशिखा बिन्दुरूपा, तां शाक्तस्फारोद्दीपनात् दीपरूपां नादसूचिशेखरमुद्रानुप्रवेशेन उद्दीपयामि ॥ २४ ॥

वृत्तित्यागामृतकला-
चन्द्रश्चन्द्रकिरीटिनः ।
समालम्भनमेवास्तु
मुमुक्षूणां विमुक्तये ॥ २५ ॥

प्रमाणविपर्ययविकल्पनिद्रास्मृतिवृत्तिप्रहाणपरिशिष्टतदनुप्राणकाविनाशबोधघनसाररूपं सम्यक् आलम्भनं समालम्भनं, सर्वाच्छुरणात् समालम्भकं वा तादृशा एव हि मुमुक्षवो मुच्यन्ते इति । तदुक्तमुत्पलदेवपादैः

‘योऽविकल्पमिदमर्थमण्डलं
पश्यतीश निखिलं भवद्वपुः ।
स्वात्मपक्षपरिपूरिते जग-
त्यस्य नित्यसुखिनः कुतो भयम् ॥’

इति ॥ २५ ॥



नादशक्त्युदितं धाम
मलत्रयविवर्जितम् ।
उष्णीषमस्तु ते रुद्र
विद्रावितनभोऽर्गलम् ॥ २६ ॥

नादशक्तेः बिन्दूर्ध्वकलाया उदितम् उपरिगतं नादान्ततेजोव्यपदेश्यं प्रकाशकत्वात् धाम, तदेव अवच्छेदहेतुना आणवादिना मलत्रयेण विरहितम्, तथा विद्रावितनभोऽर्गलम् क्षपितपरव्योमानुवेधनिरोधकग्रन्थिचक्रम्, उषणे विकल्पप्लोषणे ईशम् उष्णीषमिति अक्षरसाम्येनापि निरुक्तिः ॥ २६ ॥

भवद्भक्तिसुधासार-
संप्लावितहृदम्बुधेः ।
प्रोल्लसद्ब्रह्मकमल-
ममलं तेऽस्तु शेखरम् ॥ २७ ॥

पं० ६ ख० पु० नादान्तर्भेदेन व्यपदेश्यमिति पाठः ।

अनुग्रहशक्तिरूपभक्त्यमृतवर्षागाधीकृतहृत्समुद्रप्रतिभातब्रह्मपुण्डरीकं शिखान्तप्रान्तकोट्यवभासनात् शेखरम् ॥ २७ ॥

बोधारविन्दसंदोहो
हर हारलता तव ।
नित्योदितान्तरव्याप्तिः
कला चन्द्रकला च ते ॥ २८ ॥

नानाकारकरणेश्वरीसमुपहृतविषयोपहारहारलतावतस्तदैक्यसमापत्तिमहाकाशव्याप्तिरेवाह्लादनदीप्तिधात्वर्थानुगमात् चन्द्रकला, तवेति चन्द्रकमलमीलननयः कोऽपि गुरुमुखरहस्यक्रम उद्दीपितः ॥ २८ ॥

आकृष्यार्ककरैः शाक्तै-
र्विश्वाकाशकुशेशयात् ।
चिच्चन्द्रामृतनिःष्यन्द-
मास्वादय जगत्पते ॥ २९ ॥



विश्वाकाशकुशेशयात् प्लावकरसयुक्त्या अखिलविगलनक्रमेण । तदुक्तं मया चक्रेश्वरभैरवाष्टके

‘भूतचतुष्टयकवलन-
बृंहिततनुगगनमप्यनुच्चण्डम् ।
परमाणुवत्प्रहीणं
यत्र नभस्तन्नुमः शैवम् ॥’

इति । शाक्तैरर्ककरैर्महाकालसंकर्षिणीकिरणैः चिद्रूपचन्द्रपीयूषरसचर्वणेन चिन्नभसोऽपि उ........
........................णतापादनानन्तरसकलधामघट्टनात् घोराघोरघस्मररावारावविद्रावणचक्रातिचक्रोत्तरमहास्फारमयमहामुद्राविद्रावणानुत्तरपरपरिस्पन्दसौन्दर्यविद्योतनेनामावस्यावासनावासितः कोऽपि संप्रदाय उट्टङ्कितः ॥ २९ ॥

मन्त्रं मनसि तच्छक्तौ
तां स्वधाम्नि सदोदिते ।
कृत्वा जपविधिं सम्यक्
शिवाय विनिवेदये ॥ ३० ॥

---

पं० ४ ख० पु० गगनमध्यमुच्चण्डम् इति पाठः ।

'सहस्रो मानस' इति नीत्या मन्त्रमनाहतसततोच्चरदकुलभट्टारकाकारम्

'आ गोपालाङ्गनाबालम्लेच्छाः प्राकृतभाषिणः ।
अन्तर्जलचराः सत्त्वास्तेऽपि नित्यं ब्रुवन्ति तम् ॥'

इति प्राणात्मिककलांशांशिकास्थितसमस्ततिथिविषुवदयनपरिगमपूरपूरिताशेषजपफलमेकोच्चारविप्रसृताक्षमालाक्षमालोपरिगताद्यन्तकर्मस्पन्दमेरुपर्यावृत्तिदर्शितसृष्टिसंहारं मनसि अवधानमये कृत्वा, तदपि मनः प्राप्तमन्त्रसामरस्यं शक्तौ प्रथनप्रथमवीर्ये कृत्वा, शक्तिमपि निजमहिमनि नित्यमपरित्यक्तसार्वात्म्यसर्वोत्तीर्णतातिरेकमहोदये सर्ववर्णानां शक्तिक्रमस्फुरिततत्तत्स्वरूपानुप्राणनेन स्वरूपलाभात् । तदुक्तम्

'तदाक्रम्य बलं मन्त्राः'

इति । एवंविधं जपमकरणकरणेन निर्वर्त्य, शिवाय स्वात्ममहेश्वरे तादर्थ्येन विशेषेण निरवशेषं बुद्ध्वे सम्यक्, इत्येवंविधमहावीर्यस्फारसामरस्यमयसत-



तोदितजपावधानातिरेकेण पशूनां जप उच्चरितप्रध्वंसिवर्णनिर्वर्त्यः, एतत्परमार्थतायामपि निर्वीर्यबीजतया न सम्यक्सिद्धिसाधनभावमश्नुत इति उक्तं भवति ॥ ३० ॥

निःशेषार्थपरित्यागे
　ग्रहणे वामितद्युते ।
अनाबिलां परां व्याप्तिं
　मुद्रां बध्नामि धूर्जटे ॥ ३१ ॥

धुनोति सर्वं, रंहति सर्वत्र, जनयति सर्वं, टीकते सर्वत्र इति आगूरिताक्रमचतुष्टयार्थो धूर्जटिः । एतां लयोदयमुद्रामेकामपि पञ्चधा वक्ष्यमाणनयेन स्फुरन्तीं बध्नामि आत्मसात्करोमि । अखिलार्थपरिहारे वा स्वीकारे वा अस्खलनात् अपरिच्छिन्नमहिमन्?, वेद्यवेदककालिकाभिः अकलुषिताम्, अकृत्रिममहाव्याप्तिमयीम् । इयमेव च अन्तर्लक्ष्यबहिर्दृष्टिभावेन त्यागग्रहाभ्यां भैरवी, अखिलास्वादचमत्कारस्फुरणाभ्यामपि त्यागग्रह-

विग्रहा लेलिहाना, सर्वपरिक्षपणेन च स्वावशेषमात्रेणापि त्यागग्रहात्मिकेव करङ्किणी, स्वरूपाक्षमतायामपि तद्ग्रासगृध्नुस्फुरत्तासारैव तद्रूपैव क्रोधिनी, परव्योम्नि व्याप्त्युन्मिमिषासंजिहीर्षात्मकोल्लासोपशमसाध्यैव खे चरतीति खेचरी इत्येतल्लक्षणलक्षिततयैव सर्वमुद्राणामियमेकैव पञ्चधा प्रसरन्ती तत्तद्वचनभेदैश्चर्व्यते चर्च्यते च ॥३१॥

शष्कुलीकर्णयोर्बद्धा
  यो रावोऽत्र विजृम्भते ।
तद्गीतमथ ते वाद्य-
  माद्यसंपुटघट्टनात् ॥ ३२ ॥

श्रोत्रपुटिकाबन्धयोः योऽन्तर्निनदन्निव सामान्यस्वररूपो योऽसौ, गीतं स एव, आद्यकन्दोभयपक्षसंकोचात् नानानाडीवेणुवने विचरन् उपजनिततततघनसुषिरतारमन्द्रमध्यमभेदाङ्कुरितकलाप्रस्तारास्त्वृतचञ्चत्पुटचाषपुटपञ्चपाणिप्रमुखमुखरतरतारभेदो वाद्यभावं भजते । 'शष्कुलीकर्णयोरन्तर्' इति वा पाठः—गोलकतच्छक्त्योरन्तरित्यर्थः । गोप्य इति पाठे भगवत आमन्त्रणम् स्वप्रकाशत्वादनन्यप्रकाश्य! इत्यर्थः, शष्कुलीकर्णयोराद्यसंपुटघट्टनात् यो रावस्तद्गीतमिति अन्वीयते ॥ ३२ ॥



भवद्भावरसावेशा-
  त्ताण्डवाडम्बरोद्धतः ।
मन्त्राध्वनि नदाम्यन्तः
  किमु बाह्यार्थभावनैः ॥ ३३ ॥

त्वन्मयतोत्कर्षेषु शृङ्गारादिष्वपि रसेषु आवेशात्त्वदनुकारिविकीर्णनिजमरीचिमयकरकल्पितसंकीर्णासंकीर्णपताकादिसमुद्बोधितभाववैभवाभिनयो भवाभवोद्धट्टनविघट्टनजवनिकाप्रवेशनिर्गमनाकम्पितस्वरूपोऽपि नृत्तमारभे, तदुक्तं मया शिवरात्रिविचारवार्तिके

पं० १ क० पु० बाह्यभावमिति पाठः ।
पं० ७ ख० पु० भवद्भक्तिरसेति, डम्बरोद्यत इति च पाठः ।

‘ नित्यमात्तकरणक्रमोन्मिष-
चित्रभावशतसंनिवेशिनीः ।
निष्क्रियो निजमरीचिनर्तकी-
र्नर्तयामि परनृत्तदैशिकः ॥’

इति । मन्त्राध्वनि ध्वनिधामनि गुप्तभाषणप्रवणपश्यन्तीपदे, यद्वा वाच्यवाचकाध्वषट्कमध्यवर्तिपञ्चमन्त्रमहिमनि, नदामि चिद्धैरवैकघनताप्रमोदेन गर्जामि । किं वराकैर्बाह्यविषयविकल्पातङ्कैः, इति पररसपरितृप्तिमहोद्गारं प्रकटयति ‘ न माम्यन्तः किमु बाह्येऽत्र भौवने’ इति वा पाठः, तत्र न मामि न वर्ते किमु भौवने कलादौ अकलान्ते भुवनाध्वनि इत्यर्थः ॥ ३३ ॥

अखण्डमण्डलाकार-
शिवताभावनाम्बरम् ।
उपरिष्टान्मया शम्भो-
र्वितानमुपकल्पितम् ॥ ३४ ॥

पं० ८ ख० पु० विकल्पाडम्बरैरिति पाठः ।



वितनोति सर्वं वितन्यते वा सर्वत इति वितानम् ॥ ३४ ॥

रेचयित्वा करन्ध्रेण
भाचक्रं हृदयाम्बरात् ।
धार्यते धूर्जटेरग्रे
चारुचामरवन्मया ॥ ३५ ॥

प्रबुद्धकुण्डलिनीस्पर्शीभावभासुरमध्यमधामदण्डानुप्रेरणप्रयत्नप्रसृतब्रह्मबिलोत्कालितबैन्धवदीप्तिवृन्दं हृदयगगनप्रसृतं त्रिविधतापहारितया चामरं धारयामि ॥ ३५ ॥

नासापुटकुटीकोटि-
विसृतैः प्रसृतैः पुरः ।
तालवृन्तैरिव विभो
वीज्यसे हंसमारुतैः ॥ ३६ ॥

विसृतैः प्रविष्टैः, प्रसृतैर्निर्गतैः, हंसमारुतैः प्राणपवनैस्तालवृन्तैरिवोत्क्षेपकतुल्यैः ॥ ३६ ॥

सर्वातपविनिर्मुक्तं
भवद्भक्तिसुधासितम् ।
आतपत्रमथास्माभि-
र्धार्यते ते महाशय ॥ ३७ ॥

विषयासङ्गकलिलरहितं, त्वन्मयतामृतविमलं छत्रं धार्यते ॥ ३७ ॥

ममतामन्दुरात्यागा-
त्त्रैलोक्याकर्षणक्षमः ।
अहंकारतुरङ्गस्ते
वाहनाय प्रकल्पितः ॥ ३८ ॥

भवनिरावरणविजययात्रोपक्रमे, नियताहन्ता-ममतापरिक्षये, पूर्णाहन्तात्मकोऽहङ्कारो हयस्त्व-दतिवाहनाय ॥ ३८ ॥

स्वसंविन्नन्दनानन्द-
नागवल्लीदलोज्ज्वलम् ।



स्फुरत्स्पन्देन्दुसुरभि
ताम्बूलं ते निवेद्यते ॥ ३९ ॥

ताम्बूलं – ताम्रभवामूलम्, अखिलोपरञ्जक-त्वात्, निजबोधानन्दनन्दनोद्यानप्रफुल्लो, नागः शारीरः पवनविशेषः तस्य वल्ली प्रथमप्राणोद्भेद-शक्तिः तत्संपत्तिकासुन्दरम्, उद्गच्छदाद्यच्छाचि-मिचिमिकाकर्पूरवासिता – उभयोरपि सर्वचम-त्कारकत्वात् ॥ ३९ ॥

भोग्यभोक्तृविभेदोत्थ-
वासनेन्धनसंचयम् ।
अद्वैताग्नौ जुहोम्यन्तः
शांकरे श्रेयसां निधौ ॥ ४० ॥

भोग्यभोक्तृविभागतदुद्गतवासनादारुविसरम्, अविभागशम्भुधाम्नि सामरस्यं लम्भयामि ॥४०॥

प्रकाशाकाशहस्ताभ्या-
मवलम्ब्योन्मनास्रुचम् ।



धर्माधर्मगलत्स्नेह-
पूर्णां वह्नौ जुहोम्यजे ॥ ४१ ॥

अजे सर्वादिसिद्धे पूर्वोदिते शिवधामहव्यभुजि, ग्राह्यग्राहकभेदवासनेन्धनदहनसमेधिते, स्वरसविगलितप्रियाप्रियफलधर्माधर्मनिबद्धवासनाघृतपूर्णाहुतिं जुहोमि अविमर्शतद्विरामरूपसमनोन्मनापाणिभ्यां, सूक्ष्मकरणशक्तितदुपरमाङ्गुलिपञ्चकोपशोभिताभ्यां, तदुपरिवर्तनात् 'उन्मन्यन्ते परः शिव' इति दृशा उन्मनास्रुचं परिगृह्य पूर्णां जुहोमि, इति संक्षयप्रधानायामपि वृत्तौ अविलुप्तमेव पारिपूर्ण्यम्—इति पूर्णकृशदेवतैकात्म्यमयः कोऽपि नयः प्रथितः। उक्तं च मयैवाकुलकालिकात्रिंशिकायाम्

'स्वानन्दतस्त्रिभुवनं कवलं विधाय,
स्वात्मानमप्यतितरां समदा ग्रसन्ती।
तृप्ता, तथाप्यपरिखण्डितनित्यसिद्ध-
स्वातन्त्र्यपूर्णविभवा, कृशमूर्तिरव्यात्॥'

इति ॥ ४१ ॥



युष्मद्ध्याननिशानाथ-
किरणैरुपरञ्जितः।
अन्तर्मानविधौ तेऽस्तु
चित्तचिन्तामणिर्मम ॥ ४२ ॥

बाह्यव्यावृत्तिविगमपूर्वकम् अन्तर्मननम् अनन्यतया स्फुरणम् अन्तर्मानं तद्विधौ, त्वदनुभवशशिप्रकाशविवशीकृतः, चित्तमेव चिन्तामणिर्भवत्समावेशेन तद्वदेव संकल्पमात्रेण सर्वसमुल्लासात् ॥ ४२ ॥

मोक्षलक्ष्मीकराम्भोज-
पात्रे विन्यस्य संस्कृताम्।
निवेदयामि भगवन्
प्राणसर्वस्वदक्षिणाम् ॥ ४३ ॥

प्राणा एव तेषां वा सर्वस्वम् आणवं स्वरूपं, तत् निवेदयामि—मायीयपारिमित्याभासनिराससमुपलब्धसततसिद्धपरपारिपूर्ण्यबृंहिततया निः-



शेषतो वेदयामि। मोक्षलक्ष्म्या भवोन्मुख्यपरावृत्तायाः संविद्देव्याः कराम्भसि परमवीचिनिःष्यन्दे जातं यत् पात्रं पातत्राणात्मकम् अविलुप्तम् अवधानं, तदर्पितं कृत्वा, संस्कृतां कृतशास्त्राचार्यसंप्रदायोपस्करम्। तदेवं मायोपकल्पिततत्तदवच्छेदविच्छेदिक्रमाक्रमचक्रचारमहासामरस्यसमापत्तिप्रतिपादनेन यदेव 'नमः सूर्यकला' इत्यादिना प्रक्रान्तं तदेव पर्यवसितम् ॥ ४३ ॥

संसारवारिधेः सन्तः
परं पारं तितीर्षवः।
चन्द्रमौलेः श्रयन्तूच्चै-
र्भावपूजातरण्डकम् ॥ ४४ ॥

श्रयन्तु अवधानेन सेवन्ताम्, भावपूजामयं तरण्डकं पोतम् ॥ ४४ ॥

इत्थमीशानचरण-
नुतेर्यत्समुपार्जितम्।

पं० १५ ग० पु० ईशानचरणौ नुत्वा इति पाठः।



श्रेयस्तेन जगत्कृत्स्नं
द्वेषदोषाद्विमुच्यताम् ॥ ४६ ॥

नियतदर्शनावग्रहग्रहसमुद्गतदर्शनान्तरनिर्भर्त्सनाखण्डनसमयलोपात् जगत् विमुक्तमस्तु, नियतदर्शनहेवाकिता हि सर्वोदयविश्रामभूमिभूतपरतत्त्वपरिखण्डनत्वामरत्वात् सर्वस्यैव परः प्रकारः। तदुक्तं मया कृतान्ततान्तिशान्तिस्तवे

'मायेयं बहुरूपतामुपगता नाना यथा ते विभो
विद्याप्येवमनन्तभेदगहना नो चेत्कथं स्यादिदम्।
नैःस्वाभाव्यगमेन केचन परे वैविक्त्यतः केऽपि वा
सार्वात्म्येन परे तदुत्तरदृशा मुक्ताः परे सर्वतः ॥'

इति। अद्वयद्वादशिकायामपि

'यद्यतत्त्वपरिहारपूर्वकं
तत्त्वमेषि तदतत्त्वमेव हि।
यद्यतत्त्वमथ तत्त्वमेव वा
तत्त्वमेव ननु तत्त्वमीदृशम् ॥'

इति ॥ ४५ ॥

पं० ६ ख० पु० संसारस्यैवापर इति पाठः।
पं० १६ ख० न च तत्त्वमिति पाठः।

स्तोत्रं गृहाण परमेश्वर विश्वसाक्षिन्
मानावमानममतोज्झितचित्तवृत्तेः ।
मत्तस्त्वदङ्घ्रियुगपीठनिलीनमौले-
र्भस्मावगुण्ठिततनोर्नृकपालपाणेः ४६

विश्वस्य साक्षी विश्वरूपो वा आमन्त्र्यते, मानावमानयोः ग्रहणाग्रहणयोः निष्प्रपञ्चप्रपञ्चयोः ममतया उज्झिता चित्तवृत्तिर्यस्य तद्युक्ता वा त्यक्ता चित्तवृत्तिर्येन, अंहः पापं हरति इति, अहंकृदेव वा अङ्घ्रिः तद्युगम् अनावरणज्ञानक्रियारूपं तस्य पीठं परमशिवरूपं तत्र निलीनमौलेः प्रशान्तकरणचन्द्रपञ्चककचितचित्तशेखरस्य, तथा भस्मना कारणपञ्चककञ्चुकोपचयप्लोषपरिशिष्टेन अखिलभूतिहेतुना अवबोधभूतिविभवेन अवगुण्ठिता आच्छादिताः तनवः मिततया स्फुरन्तः सर्वभावा येन, नुः अणोर्यत्कपालं, कं महास्वातन्त्र्यरूपम् अनवच्छिन्नं ब्रह्म पालयति गोपायतीति नृकपालं



कर्परं तत् पाणौ एकस्मिन् उद्भूषामरीचिलक्षणे मिततया इयत्तया तुलितं यस्य स तथोक्तः ४६

महापाशुपतोद्याने
कश्चिद्विश्रम्य तापसः ।
चक्रे चिच्चक्रनाथस्य
शम्भोर्भावनुतिं पराम् ॥ ४७ ॥

'निरस्तशास्त्रार्थविकल्पजाला
देव्यः श्मशाने करवीरकाख्ये ।'

इति दृशा भस्मशब्दव्याख्यानवर्णितस्वरूपे महापाशुपतोद्याने, भैरवाणां पशूनां पतिरकलितचिच्चक्रेश्वरात्मकः तदुद्याने तदूर्ध्वयाने सर्वातिशायिनि, विश्रम्य अनन्यतया प्रतिष्ठां प्राप्य, अत एव कश्चित् अज्ञायमानपशुपरिकल्पितनियतसंज्ञावच्छेदो, महति तपसि चित्समावेशमये भवः तापसः चिच्चक्रनाथस्य

'सर्वसंविन्नदीभेदाभिन्नाविश्रामभूमये ।
नमः प्रमातृवपुषे शिवचैतन्यसिन्धवे ॥'

इत्यादिना राजानकोत्पलदेवनिर्वर्णितस्वरूपस्य शम्भोः श्रेयःप्रभवस्य भावेन सर्वभावैक्यसमापत्तिसमावेशमयेन नुतिं परां चक्रे, इति चक्रनाथ-चक्रेशब्दाभ्यामात्मनः चक्रपाणिनाम द्योतयति ॥ ४७ ॥

‘अदृष्टविग्रहागतं
मरीचिचक्रविस्तरम् ।
अनुग्रहैककारणं
नमाम्यहं गुरुक्रमम् ॥’

योगानन्दाभिधानद्विजवरवदनायातपीठेशिदेवी-
पादावद्योतिताङ्घ्रप्रणयनजनितानन्तसोत्साहहर्षः ।
स्तोत्रे भावोपहारे विवरणमकरोद्रम्यदेवो द्विजन्मा
जन्माद्यायासभङ्गप्रवणमतिलसत्सद्रहस्योपदेशः ॥

---

इति श्रीचक्रपाणिनाथविरचिते भावोपहारस्तोत्रे विवरणं समाप्तम्
कृतिस्तत्रभवद्भट्टज्योग्देवात्मज-भट्टश्रीरम्यदेवस्य ॥

---



सद्विद्यानां संश्रये ग्रन्थविद्वद्-
व्यूहे ह्रासं कालवृत्त्योपयाते ।
तत्तत्सद्धर्मोद्दिधीर्षैकतान-
सत्प्रेक्षौजःशालिना कर्मवृत्त्यै ॥ १ ॥

श्रीमत्कश्मीराधिराजेन मुख्यै-
र्धर्मोद्युक्तैर्मन्त्रिभिः स्वैर्विवेच्य ।
प्रत्यष्ठापि ज्ञानविज्ञानगर्भ-
ग्रन्थोद्धृत्यै मुख्यकार्यालयो यः ॥ २ ॥

तत्राजीवं निर्विशद्भिर्मुकुन्द-
रामाध्यक्षत्वाश्रितैः सद्भिरेषः ।
पूर्त्या शुद्ध्या व्याख्यया संस्कृतः स्तात्
पूर्णो ग्रन्थः श्रेयसे सज्जनानाम् ॥ ३ ॥

(तिलकम्)

---

श्रीस्वात्मशिवार्पणमस्तु ॥

---

ओं नमोऽनन्तचिन्मूर्तये शंकराय ।

अथ

# बोधपञ्चदशिका ।

श्रीमदाचार्याभिनवगुप्तपादविरचिता

ओं अनस्तमितभारूप-
स्तेजसां तमसामपि ।
य एकोऽन्तर्यदन्तश्च
तेजांसि च तमांसि च ॥ १ ॥
स एव सर्वभूतानां
स्वभावः परमेश्वरः ।
भावजातं हि तस्यैव
शक्तिरीश्वरतामयी ॥ २ ॥
शक्तिश्च शक्तिमद्रूपा-
द्व्यतिरेकं न वाञ्छति ।
तादात्म्यमनयोर्नित्यं
वह्निदाहिकयोरिव ॥ ३ ॥



स एव भैरवो देवो
जगद्भरणलक्षणः ।
स्वात्मादर्शे समग्रं हि
यच्छक्त्या प्रतिबिम्बितम् ॥ ४ ॥
तस्यैवैषा परा देवी
स्वरूपामर्शनोत्सुका ।
पूर्णत्वं सर्वभावेषु
यस्य नाल्पं न चाधिकम् ॥ ५ ॥
एष देवोऽनया देव्या
नित्यं क्रीडारसोत्सुकः ।
विचित्रान्सृष्टिसंहारा-
न्विधत्ते युगपद्विभुः ॥ ६ ॥
अतिदुर्घटकारित्व-
मस्यानुत्तममेव यत् ।
एतदेव स्वतन्त्रत्व-
मैश्वर्यं बोधरूपता ॥ ७ ॥
परिच्छिन्नप्रकाशत्वं
जडस्य किल लक्षणम् ।



जडाद्विलक्षणो बोधो
यतो न परिमीयते ॥ ८ ॥
एवमस्य स्वतन्त्रस्य
निजशक्त्युपभेदिनः ।
स्वात्मगाः सृष्टिसंहाराः
स्वरूपत्वेन संस्थिताः ॥ ९ ॥
तेषु वैचित्र्यमत्यन्त-
मूर्ध्वाधस्तिर्यगेव यत् ।
भुवनानि तदंशाश्च
सुखदुःखमतिर्भवः ॥ १० ॥
यदेतस्यापरिज्ञानं
तत्स्वातन्त्र्यं हि वर्णितम् ।
स एव खलु संसारो
जडानां यो विभीषकः ॥ ११ ॥
तत्प्रसादरसादेव
गुर्वागमत एव वा ।
शास्त्राद्वा परमेशस्य
यस्मात्कस्मादुपागतम् ॥ १२ ॥



यत्तत्त्वस्य परिज्ञानं
स मोक्षः परमेशता ।
तत्पूर्णत्वं प्रबुद्धानां
जीवन्मुक्तिश्च सा स्मृता ॥ १३ ॥
एतौ बन्धविमोक्षौ च
परमेशस्वरूपतः ।
न भिद्येते न भेदो हि
तत्त्वतः परमेश्वरे ॥ १४ ॥
इत्थमिच्छाकलाज्ञान-
शक्तिशूलाम्बुजाश्रितः ।
भैरवः सर्वभावानां
स्वभावः परिशील्यते ॥ १५ ॥
सुकुमारमतीञ्शिष्या-
न्प्रबोधयितुमञ्जसा ।
इमेऽभिनवगुप्तेन
श्लोकाः पञ्चदशोदिताः ॥ १६ ॥

---

समाप्ता चेयं बोधपञ्चदशिका ।

---

कृतिर्महामाहेश्वराचार्यवर्य-श्रीमदभिनवगुप्तपादानाम् ।
प्रकाशिता च काश्मीरमहाराजाश्रितपण्डित-मुकुन्दराम-शास्त्रिणेयम् ।
मुंबई—"तत्त्वविवेचक" प्रेस.

ओं नमोऽनुत्तरप्रकाशशंकराय ।

अथ

# अनुत्तरप्रकाशपञ्चाशिका ।

श्रीआद्यनाथविरचिता ।

अकृत्रिमाहमामर्शप्रकाशैकघनः शिवः ।
शक्त्या विमर्शवपुषा स्वात्मनोऽनन्यरूपया॥ १ ॥
शिवादिक्षितिपर्यन्तं विश्वं वपुरुदञ्चयन् ।
पञ्चकृत्यमहानाट्यरसिकः क्रीडति प्रभुः ॥ २ ॥
पृथगर्थमर्थवत्ता विश्वविश्वशरीरयोः ।
न विश्वविश्ववपुषोर्भिन्नता कापि तात्त्विकी ॥३॥
भेदे सत्तास्फुरत्ताभ्यां भिन्नं किं तु जगद्भवेत् ।
सत्तास्फुरत्तासंबन्धात्सत्ता भानं च तन्न चेत् ॥४॥
असतः किं सतस्ताभ्यां संबन्धः सोऽयमिष्यते ।
स्वरूपलाभसुलभः संबन्धो नह्यवस्तुनः ॥ ५ ॥
न लब्धरूपसंबन्धे ताभ्यां किंचिदपेक्ष्यते ।

अपेक्षायामवस्थानं न स्यादेतस्य किंचन ॥६॥
स्वभावतः स्फुरत्ता च सत्ता च न विनाशिनी ।
विनाशानभ्युपगमे जडतापि निवर्तते ॥ ७ ॥
ततो गत्यन्तराभावाच्चिदेव परिशिष्यते ।
सतश्चिदैक्यं प्रकृतं कदाचिन्न निवर्तते ॥ ८ ॥
प्रकाशोऽनन्यतो भावः स्वातन्त्र्योल्लासकेवलः ।
परिच्छिन्नात्मिका शक्तिः शम्भोर्विश्वातिशायिनः
॥ ९ ॥
यत्प्रकाशात्मकं सर्वं तमःकेवलतां गतम् ।
यच्च किंचिज्जगदेतत्प्रकाशादतिरिच्यते ॥ १० ॥
विमृश्यसरणीं प्राप्तमित्येषा तात्त्विकी मतिः ।
अवभासैकतानानां मतिरेकात्र साक्षिणी ॥११॥
किं प्रमाणैर्वराकैस्तैश्चिदनुप्राणितात्मभिः ।
नहि वैकर्तनं ज्योतिर्दीपालोकमपेक्षते ॥ १२ ॥
शक्तिपातपवित्रेऽस्मिन्धीतत्त्वे च परीक्ष्यताम् ।
आदर्शविमलाभोगे न तु सर्वं प्रकाशते ॥१३॥



इत्थं चिदात्मकं सर्वं षट्त्रिंशद्भेदतत्त्वतः ।
आदौ शुद्धात्मकं तत्त्वं पञ्चधा तमसः परम्
॥ १४ ॥
शिवः शक्तिश्च सादाख्यमीशो विद्येति भिद्यते ।
अक्षादिशान्तवर्णात्मा निरमायि शिवेन तु
॥ १५ ॥
कलाविद्यारागकालनियतिर्बन्ध उच्यते ।
मायापूर्वो वकारादिक्षकारान्ताक्षरात्मकः ॥१६॥
पुमाञ्शक्तिर्मनो बुद्धिरहंकारादिपञ्चकम् ।
श्रोत्रादिपञ्चकं तादि टादि वागादिपञ्चकम्
॥ १७ ॥
तन्मात्रपञ्चकं चादि कादि व्योमादिपञ्चकम् ।
सिसृक्षोः प्रथमस्पन्दः शिवतत्त्वं विभोः स्मृतम्
॥ १८ ॥
इच्छैव सापरिम्लाना शक्तितत्त्वमुदञ्चयन् ।
स्वेच्छया सूचितं विश्वमाच्छाद्याहन्तया स्थि-
तम् ॥ १९ ॥

---

१ इत्थमित्यादि पद्यपञ्चकं ग्रन्थान्तरैर्विसंवाद्यर्थकमादर्शान्तरानुपलब्ध्या यथावदुपन्यस्तम् ।

स एव तत्त्वं सादाख्यं सर्वानुग्रहणोद्यतम् ।
स एवेश्वरतत्त्वं स्यात्पश्यन्विश्वमिदन्तया ॥२०॥
इदन्ताहन्तयोरैक्यमिति विद्या निगद्यते ।
स्वाङ्गकल्पेषु भावेषु मायातत्त्वं विभेदधीः॥२१॥
मायागृहीतसंकोचः शिवः पुंतत्त्वमुच्यते ।
अयमेव हि संसारी जीवो भोक्तैव दृश्यते ॥ २२॥
ज्ञत्व-कर्तृत्व-पूर्णत्व-नित्यत्वान्यस्य शक्तयः ।
तत्संकोचात्संकुचितः कलाद्यात्मतया मतः॥२३॥
मायात्मकं कला नाम किंचित्कर्तृत्वकारणम् ।
विद्या किंचिज्ज्ञताहेतू रागोऽभिष्वङ्गकारणम् २४
कालः परिच्छेदकरो नियतिश्चेदमेव मे ।
कर्तव्यं नान्यदित्येषा व्यवस्था यन्त्रणाकृतिः २५
प्रकृतिर्गुणसाम्यं स्यादहंकारादिजन्मभूः ।
अहं ममेदमित्येतद्बुद्धिहेतुरहंकृतिः ॥ २६ ॥
बुद्धिरध्यवसायस्य कारणं निश्चयात्मनः ।
संकल्पस्य विकल्पस्य बीजं मन उदीर्यते ॥ २७॥
वचनादेश्च शब्दादेर्वागादि-श्रवणादिकम् ।



कारणं श्रवणादीनां ग्राह्यं तन्मात्रपञ्चकम् ॥२८॥
आकाशाद्यवकाशादिकारणं भूतपञ्चकम् ।
परापराशक्तिमये शुद्धे विद्यादिपञ्चकम् ॥ २९ ॥
तदन्यदपराशक्तिरित्येतत्तत्त्वमीरितम् ।
इयं देवी परा शक्तिः शुद्धाशुद्धाध्वगर्भिणी ॥३०॥
पृथिव्यादीनि तत्त्वानि यदा लीनानि कारणे ।
तदा कारणमात्राणि बहिरुद्वमते विभुः ॥ ३१ ॥
[1]अनुत्तरेच्छे उन्मेष आनन्देशनमूनता ।
क्रियेच्छाज्ञानशक्तीनां सत्ता षट्···· ॥ ३२ ॥
इच्छेशनान्तरारूढा स्फुटास्फुटजगन्मयी ।
चत्वारः परतो वर्णाः षण्डात्मानः प्रचोदिताः
॥ ३३ ॥
अनुत्तरानन्दरूढा स्फुटास्फुटजगन्मयाः ।
चत्वारः परतो वर्णाः षण्डात्मानः प्रचोदिताः
॥ ३४ ॥
अनुत्तरानन्दशक्तिस्त्रिकोणाद्वृत्तियोगतः ।

---

१ अनुत्तरेत्यादित्रिपद्येष्वर्थासंगत्या पाठाशुद्धिः प्रतिभाति ।

तथैवोन्मेषयोगेन क्रियाशक्तेः स्फुटं वपुः ॥ ३५ ॥
उक्तं त्रिशक्तिसंघट्टात्रिशूलं द्वैतघस्मरम् ।
परस्परविरोधे तु कार्येषु प्रविरोहति ॥ ३६ ॥
न कथंचिदुपादेयमासां रूपमिदं भवेत् ।
बिन्दुर्वेद्यस्य संस्कारो विमर्शः सर्ग इत्यसौ ॥३७॥
कलाषोडशकाकारा शक्तिर्विजयते परा ।
तिथयः प्रतिपत्पूर्वाः पञ्चदशेति मायया ॥ ३८ ॥
सूर्याचन्द्रमसौ स्वान्तश्चरन्तौ स्थितिहेतवे ।
यथा विमर्शवपुषः सर्गस्याद्याः कलाः स्मृताः ॥ ३९ ॥

द्विधेयं मातृका देवी बीजयोन्यात्मना स्थिता ।
नित्यप्रवृत्तशृङ्गाटवपुर्विश्वस्य जन्मभूः ॥ ४० ॥
हृदयं बीजमेतस्यां सारं यत्तत्परं महः ।
वटबीजे यथा वृक्षस्तथात्र निहितं जगत् ॥ ४१ ॥
विचार्यमाणे नैवेदं कारणादतिरिच्यते ।
मृदादेः कलशादीनां तत्त्वं नान्यन्निरूपणे ॥४२॥
इत्याहुस्तत्त्ववादिन्यः श्रुतीनामन्तिमा गिरः ।



इदं सर्वं सदेवासीदग्रे इति विनिश्चयात् ॥४३॥
सत्तावाचिनि बीजेऽस्मिन्भाति माया त्विदं जगत्
विलुप्तप्रत्ययाकारमेतत्स परिशिष्यते ॥ ४४ ॥
ततो ज्ञानक्रियासारविद्येश्वरसदाशिवाः ।
शक्तित्रिशूले लीयन्ते चतुर्दशकलात्मनि ॥४५॥
ऊर्ध्वाधः सृष्टिवपुषि सर्वं लीनमतः [ परम् ] ।
इत्थं परस्यां संवित्तौ सर्वं संकुचितं क्रमात् ॥४६॥
अथ वा मनसातीते यत्र क्वापि निरञ्जने ।
षट्त्रिंशत्तत्त्वलहरीकलहातीतगोचरे ॥ ४७ ॥
विश्वात्मनि महामन्त्रे स्वभावे सा विलीयते ।
कुतश्चिन्मथिते धाम्नि दीप्ते केनापि हेतुना ॥४८॥
सर्वं हविरिदं जुह्वन्न दारिद्र्येण पीड्यते ।
पञ्चपञ्चात्मकं विश्वं पञ्चस्पन्दविजृम्भितम् ॥४९॥
संकोचयत्परामर्शात्सामान्यस्पन्दकेवलम् ।
अहमि प्रलयं कुर्वन्निदमः प्रतियोगिनः ॥५०॥
पराक्रमपरो भुङ्क्ते स्वभावमशिवापहम् ॥ ५१ ॥

इति षडधिकत्रिंशद्भेदप्रसक्तजगत्तनुः
प्रसरति महाशक्त्युल्लेखविचित्रमहापटी ।
जयति बहुशः स्पन्दाकारा परा चिदनुत्तरा
विमृशत जनाः किं नो भूयः स्वभावविजृ-
म्भितम् ॥

---

इति श्रीमदाद्यनाथविरचिता अनुत्तरप्रकाशपञ्चाशिका समाप्ता ॥

---

सेयं काश्मीरभूपालसंश्रितेन प्रकाशिता ।
सता मुकुन्दरामेण सन्मुदेऽस्तु शिवेऽर्पिता ॥

---

मुंबई—"तत्त्वविवेचक" प्रेस.

---

THE KASHMIR SERIES
OF
TEXTS AND STUDIES.

---



KASHMIR SERIES OF TEXTS
AND STUDIES.
No. XV.

THE

# PARĀ PRĀVESHIKĀ

OF

KṢHĒMARĀJA.

EDITED WITH NOTES
BY

MAHĀMAHOPĀDHYĀYA PAṆḌIT MUKUNDA RĀMA SHÂSTRÎ,
OFFICER-IN-CHARGE RESEARCH DEPARTMENT,
JAMMU AND KASHMIR STATE,
SRINAGAR.

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT
OF HIS HIGHNESS LIEUT.-GENERAL MAHĀRĀJA
SIR PRATĀP SINGH SĀHIB BAHĀDUR,
G. C. S. I., G. C. I. E.,
MAHĀRĀJA OF JAMMU AND KASHMIR STATE.




BOMBAY:
PRINTED AT THE "TATVA-VIVECHAKA" PRESS.
1918.





श्रीमच्छ्रीकण्ठनाथप्रभृतिगुरुवरादिष्टसन्नीतिमार्गो
लब्ध्वा यत्रैव सम्यक्पटिमनि घटनामीश्वराद्वैतवादः ।
कश्मीरेभ्यः प्रसृत्य प्रकटपरिमलो रञ्जयन्सर्वदेश्यान्
देशेऽप्यस्मिन्नदृष्टो घुसृणविसरवत्स्तान्मुदे सज्जनानाम् ॥ १ ॥

तरत तरसा संसाराब्धिं विधत्त परे पदे
पदमविचलं नित्यालोकप्रमोदसुनिर्भरे ।
विमृशत शिवादिष्टाद्वैतावबोधसुधारसं
प्रसभविलसत्सद्युक्त्यान्तःसमुत्प्लवदायिनम् ॥ २ ॥

ॐ

काश्मीर-संस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः १५

# पराप्रावेशिका

श्रीमन्महामाहेश्वराचार्यवर्य-श्रीक्षेमराजाचार्यविरचिता

श्रीभारतधर्ममार्तण्ड-कश्मीरमहाराज-
श्रीप्रतापसिंहवर-प्रतिष्ठापिते
प्रत्नविद्याप्रकाश-(रिसर्च) कार्यालये
तदध्यक्ष-महामहोपाध्याय-पण्डित-मुकुन्दराम-शास्त्रिणा
उद्दिष्टकार्यालयस्थेतरपण्डितसहायेन
संगृह्य, संशोधन-पर्यायाङ्कन-विवरणादिसंस्करणोत्तरं
पाश्चात्यविद्वत्परिषत्संमताधुनिकसुगमशुद्धरीत्युपन्यासादिसंस्कारैः परिष्कृत्य
मुम्बय्यां
तत्त्वविवेचकाख्य-मुद्रणालये मुद्रापयित्वा प्राकाश्यमुपनीता




संवत् १९७५ ख्रेस्ताब्दः १९१८

काश्मीर-श्रीनगर

Printed by
Bhiwaji Hari Shinde at the "Tatva-Vivechaka" Press,
Nos. 1, 2, 3, Khetwadi Back Road, Bombay;
and Published by
the Research Department, Srinagar, Kashmir.

ओं नमः शिवाय निखिलतत्त्वात्मने

अथ

# पराप्रावेशिका

श्रीमन्महामाहेश्वराचार्यवर्यक्षेमराजविरचिता ।

विश्वात्मिकां तदुत्तीर्णां
हृदयं परमेशितुः ।
परादिशक्तिरूपेण
स्फुरन्तीं संविदं नुमः ॥

इह खलु परमेश्वरः प्रकाशात्मा, प्रकाशश्च[1] विमर्शस्वभावः, विमर्शो[2] नाम विश्वाकारेण विश्वप्रकाशेन विश्वसंहरणेन च

(१) ननु परमेश्वरः प्रकाशस्वभावत्वेऽपि किं शान्तब्रह्मवादिनामिव केवलबोधस्वभावः स्यादित्याशङ्क्याह प्रकाशश्चेति ।

(२) विमर्शो हि परिमितापरिमितत्वाभ्यां द्विधा, तत्र परिमितत्वे शून्यादिप्रमातृुचितेन तेन संवित्प्रकाशस्य परिच्छिन्नत्वं मा भूदित्याश-



अकृत्रिमाहम् इति विस्फुरणम् । [३]यदि निर्विमर्शः स्यात् अनीश्वरो जडश्च प्रसज्येत । एष एव च विमर्शः – चित्, चैतन्यं, स्वरसोदितापरावाक्, स्वातन्त्र्यं, परमात्मनो मुख्यमैश्वर्यं, कर्तृत्वं, स्फुरत्ता, सारो, हृदयं, स्पन्दः इत्यादिशब्दैरागमेषूद्घो[४]ष्यते,

---

येनाह विमर्शो नामेति, स च विमर्शो विश्वाकारेण सृष्टौ, तत्प्रकाशेन स्थितौ, स्वात्मसात्कारात्मना संहरणेन संहारे च पूर्णाहन्ताचमत्कारात्मक इति यावत् ।

( ३ ) यदीति । विमर्शविकलः सूर्यादिप्रकाशो यथा परापेक्षत्वात् जडपक्षपाती अस्वातन्त्र्यमाश्रितवान् तथैव निर्विमर्शतया संवित्प्रकाशोऽपि प्रसक्तिरापतेदिति भावः ।

( ४ ) इह शैवशासननये संवित्प्रकाशस्य विमर्शप्राधान्यमेव तत्तदागमेषु समुद्धुष्टं, स एव भिन्नभिन्नाभिरागमभाषाभिराम्नायते, यथा – चैतन्यमिति विमर्श एव मुख्यमात्मनो रूपमित्यभिप्रेत्य धर्मवाचिना शब्देन निर्देशः कृतः । तथा स्वरसोदितापरावाक् इति – वक्ति विश्वमभिलपति प्रत्यवमर्शेनेति वाक्, सैव परामर्शान्तराणामाधारभूतत्वात् पूर्णत्वाच्च परा, अत एव अनिरुद्धप्रसरत्वात् अहमिति परिपूर्णचिद्वपुषा सदोदितत्वात् स्वरसोदितेति । तथा स्वातन्त्र्यमिति, स्वातन्त्र्यं च संयोजनवियोजनादिरूपं स्वस्मात् बहिष्कृतमिदन्तापदं स्वात्मनि संयोजयति, संयोज्यापि वियोजयति, शून्यादिभूमिकायां च न्यग्भावयति, – इत्यादिलक्षणत्वेन जडाद्वैलक्षण्याधायीति । तथा ऐश्वर्यमिति विश्वसर्गादावनन्यापेक्षित्वं न तु अस्य मायागर्भाधिकारिणो ब्रह्मादेरिव परेच्छावशवर्तित्वेन नियतिनियन्त्रणावत्त्वम् इति । तथा कर्तृत्वमिति, एतदेव कर्तृत्वं यत् अलौकिकेन



अत [५]एव अकृत्रिमाहमिति-सतत्त्वः स्वयंप्रकाशरूपः परमेश्वरः पारमेश्वर्या शक्त्या शिवादि-धरण्यन्तजगदात्मना स्फुरति प्रकाशते च । [६]एतदेव अस्य जगतः कर्तृत्वमजडत्वं च, [७]जगतः कार्यत्वमपि एतदधीनप्रकाशत्वमेव, एवंभूतं जगत्

---

कार्यकारणभावेन स्वान्तःप्रकाशैक्येन स्थितस्य शिवादेः पृथिव्यन्तस्य विश्वस्य इदन्तया समुन्मीलनं योगिनिर्माणवत् इति । तथा स्फुरत्तेति स्फुरणसंबन्धः, तद्धटादेर्नास्ति, तथात्वे हि सर्वेषां सदैव घटादिकं प्रस्फुरेत् न कस्यचिद्वेति सर्वसर्वज्ञता तद्विपर्ययो वा प्रसज्येत, अतो मम स्फुरतीति मदीयं स्फुरणमाविष्ट इत्यर्थः । सारमिति अतुच्छं रूपं, सा परमेश्वरस्य विमर्शशक्तिरेवेति । हृदयमिति विश्वप्रतिष्ठास्थानत्वात् । स्पन्द इति अचलस्य चित्प्रकाशस्य चलत्ताभासनं, यत् तत्र अनतिरिक्तत्वेपि अतिरिक्ततयेव विश्वावभासनमित्यर्थः ।

( ५ ) विमर्शशक्तिमाहात्म्यादेव परमेश्वरो विश्ववैचित्र्यप्रथात्मना स्वात्मनैव समुल्लसतीति प्रतिपादयन् विमर्शशक्तिलक्षणमुपसंहरति अत एवेति । मायाप्रकृत्यादेर्जगत्सृष्टौ कारणान्तरस्य भेदाभेदविकल्पैरुपहतत्वात् न तत्कर्तृत्वमुपपद्यते इति भावः ।

( ६ ) यद्विश्वात्मना परमेश्वरस्य प्रस्फुरणम् इदमेव पारमार्थिकं कर्तृत्वं, तत्स्फुरणात्मनैव प्रकाश्यमानस्य विश्वस्याजडभावोऽपि स्यादित्याह एतदेवेति ।

( ७ ) ननु जगद्विषयं कीदृक् कार्यत्वं भेदेनाभेदेन वा, भिन्नत्वे त-

---

पं० २० ख० पु० भिन्नत्वे हि इति पाठः ।

प्रकाशरूपात् कर्तुर्महेश्वरादभिन्नमेव, भिन्नवेद्यत्वेऽप्रकाशमानत्वेन प्रकाशनायोगात् न किंचित्स्यात्, अनेन च जगता अस्य भगवतः प्रकाशात्मकं रूपं न कदाचित् तिरोधीयते, एतत्प्रकाशनेन प्रतिष्ठां लब्ध्वा प्रकाशमानमिदं जगत् आत्मनः प्राणभूतं कथं निरोद्धुं शक्नुयात्, कथं च तन्निरुध्य स्वयमवतिष्ठेत, अतश्चास्य वस्तुनः साधकमिदं बाधकमिदं प्रमाणमित्यनुसंधानात्मकसाधकबाधकप्रमातृरूपतया चास्य सद्भावः, तत्सद्भावे किं प्रमाणम्? – इति वस्तुसद्भावमनुमन्यतां, तादृक्स्वभावे किं प्रमाणम्? – इति प्रष्टृरूपतया च पूर्वसिद्धस्य

---

त्कर्तुः परमेश्वरस्य स्वातन्त्र्यं नाम विघटेत, अभिन्नत्वे कथं तत् इत्याशङ्क्याह जगत इति। अस्य जगतः परप्रकाशं विना अचेत्यमानत्वात् स्वात्मलाभो दुर्घटः, तदाश्रयत्वावलम्बनात् तत् प्रकाशशरीरतामेतीत्येतदेव कार्यत्वं, केवलं मायास्वातन्त्र्येण भेदोद्भासनादभिन्नत्वेऽपि भिन्नव्यवहार इति भावः।

(८) अभेदत्वे विश्वं भातुं प्रगल्भेत, अन्यथा स्वरूपशून्यत्वात् विश्वव्यवहारो हानादानादिरूपो विनश्येदित्याशयेनाह भिन्नवेद्यत्वे इति।

(९) ननु यदि जगत् परमेश्वरादभिन्नं तत् प्रकाशैकरूपस्य जगतो भासमानत्वात् परमेश्वरे सारूप्यभेदो दुर्वारः, तेनापि तस्य तिरोधीयमानत्वं भवेदिति शङ्कां निवारयन्नाह अनेनेति। प्रत्युत स्वात्मनि लब्धेऽपि प्रकाशावरणात् स्वयमेव नष्टं भवेदित्यर्थः।

(१०) ज्ञापकादिकारकाणि पूर्वसिद्धे ईश्वरे व्यापरीतुं न शक्नुवन्ती-



महेश्वरस्य स्वयंप्रकाशत्वं सर्वस्य स्वसंवेदनसिद्धम्। किं च[११] प्रमाणमपि यमाश्रित्य प्रमाणं भवति तस्य प्रमाणस्य तदधीनशरीरप्राणनीलसुखादिवेद्यं चातिशय्य सदा भासमानस्य वेदकैकरूपस्य सर्वप्रमितिभाजः सिद्धौ अभिनवार्थप्रकाशस्य प्रमाणवराकस्य कश्चोपयोगः[१२]। एवं च शब्दराशिमयपूर्णाह[१३]-

---

त्याशयं गृहीत्वा तद्विध्यादिकर्तुः प्रमातुरपि तादृप्येण सत्त्वात् न तत्सिद्धिः प्रमाणाधीना, इत्यतः स्वप्रकाशत्वं तस्यानुभवसिद्धमित्याह अतश्चास्येति

(११) संवित्प्रकाश एव सर्वजीवितभूतो मायीयव्यवहारे प्रमाणं कल्पयति इत्यतः पूर्वसिद्धत्वात् तत्र प्रमाणं किमपि नोपयुज्यते इत्याह किं चेति। परप्रकाशापेक्षयान्यत्सर्वं जडतया स्वात्मानमपि भासयितुमशक्तं कथं परं व्यवस्थापयितुमुद्यच्छेदिति यावत्।

(१२) कश्च उपयोग इति, प्रमाणं नाम अभिनवाभासरूपं प्रमातरि प्रमितिलक्षणां विश्रान्तिं विदधत् प्रमाणं भवति, प्रमाता च नित्यावभासितत्वादविच्छिन्नाभासः सर्वाः प्रमितीः स्वात्मनि अन्तर्मुखरूपे भजते, तत् तस्मिन् कथमभिनव आभास उपयुज्यताम् तत्प्रमितिश्च कुत्रान्यत्र विश्राम्यतु, तस्मात् देहप्राणनीलसुखादिवेद्य एव प्रमाणोपयोगः न तु प्रमाणजीवितभूते परमेश्वरे। तदुक्तम्

‘प्रमाणान्यपि वस्तूनां जीवितं यानि तन्वते।
तेषामपि परो जीवः स एव परमेश्वरः॥’

इति।

(१३) शब्दराशिमयेति, शब्दराशिः – अकारादि-हकारान्तो वर्णस-

न्तापरामर्शसारत्वात् परमशिव एव षट्त्रिंशत्तत्त्वात्मकः, प-
पञ्चः । षट्त्रिंशत्तत्त्वानि च,– १ शिव २ शक्ति ३ सदा-
शिव ४ ईश्वर ५ शुद्धविद्या ६ माया ७ कला ८ विद्या
९ राग १० काल ११ नियति १२ पुरुष १३ प्रकृति
१४ बुद्धि १५ अहंकार १६ मनः १७ श्रोत्र १८ त्वक्
१९ चक्षुः २० जिह्वा २१ घ्राण २२ वाक् २३ पाणि
२४ पाद २५ पायु २६ उपस्थ २७ शब्द २८ स्पर्श
२९ रूप ३० रस ३१ गन्ध ३२ आकाश ३३ वायु
३४ वह्नि ३५ सलिल ३६ भूमयः, इत्येतानि ।

अथैषां लक्षणानि । तत्र, शिवतत्त्वं नाम इच्छा-ज्ञान-क्रि-
यात्मककेवलपूर्णानन्दस्वभावरूपः परमशिव एव । अस्य, ज-
गत् स्रष्टुमिच्छां परिगृहीतवतः परमेश्वरस्य प्रथमस्पन्द ए-

सूहो गर्भीकृतसमस्तविश्वस्तन्मयो योऽनन्यमुखप्रेक्षित्वस्वातन्त्र्यविश्रान्ति-
रूपः ‘अहमेव प्रकाशात्मा प्रकाशे’ इत्येवं-रूपः पूर्णाहन्तापरामर्शः स
एव सारम् अतुच्छं रूपं यस्य तस्य भावस्तस्माद्धेतोरित्यर्थः ।

(१४) षट्त्रिंशत्तत्त्वानि, तस्य भावस्तत्त्वम् इति भिन्नानां वर्गाणां
वर्गीकरणनिमित्तं यदेकमविभक्तं भाति तत्तत्त्वम्, यथा गिरिवृक्षपुर-
प्रभृतीनां नदीसरःसागरादीनां च पृथिवीरूपत्वमप्रूपत्वं चेति

(१५) सर्वप्रमातॄणामन्तः परिस्फुरत्पूर्णाहन्ताचमत्कारमयं सर्वतत्त्वो-
त्तीर्णं सकलतत्त्वराशिगतसृष्टिसंहारशतसहस्रप्रतिबिम्बनसहिष्णु महाप्र-
काशवपुः शिवतत्त्वम् ।



वेच्छाशक्तितत्त्वम्, अप्रतिहतेच्छत्वात्, सदेवाङ्कुरायमाण-
मिदं जगत् स्वात्मनाहन्तयाच्छाद्य स्थितं रूपं सदाशिवत-
त्त्वम्, अङ्कुरितं जगदहन्तयावृत्य स्थितमीश्वरतत्त्वम्, अहन्ते-
दन्तयोरैक्यप्रतिपत्तिः शुद्धविद्या, स्वस्वरूपेषु भावेषु भेदप्रथा
माया, यदा तु, परमेश्वरः पारमेश्वर्या, मायाशक्त्या स्वरूपं

(१६) तस्यैव स्वस्वातन्त्र्यमाहात्म्यात् बहिरुल्लिलसिषया परानन्द-
चमत्कारोद्रेकात् अहमिति परामर्शः शक्तितत्त्वम् ।

(१७) यदा परमेश्वरः शुद्धचिन्मात्राधिकरण एवाहमित्यंशे इदमंश-
मुल्लासयति तदा तस्य प्रोन्मीलितमानचित्रकल्पभावराशिविषयत्वेन अ-
स्फुटत्वात् इच्छाप्रधानं सदाशिवतत्त्वम् ।

(१८) स्फुटीभूते च इदमंशे यदाहमंशं निषिञ्चति तदा ज्ञानशक्ति-
प्रधानमीश्वरतत्त्वम् । अनयोः प्रोक्तयोस्तत्त्वयोरहंविमर्शस्याविशेषेऽपि इद-
मंशस्य ध्यामलत्वाध्यामलत्वाभ्यां विशेषः ।

(१९) यदा पुनः प्ररूढभेदभावराशिगतेदमंशस्फुरणे चिन्मात्रगत-
त्वेनाहमंशः समुल्लसति भेदाद्वैतवादिनामिव ईश्वरस्य यः समधृततुला-
पुटन्यायेनाहमिदमिति परामर्शः तत् क्रियाशक्तिप्रधानं विद्यातत्त्वम् ।

(२०) मायेति, दुष्करतमवस्तुसंपा इति दनाप्रतीघातरूपा अचिद्रूपे
शून्यादौ च प्रमातृताभिमानं प्ररूढं कुर्वती चिदेकमयानपि भावान् भेदेन
आभासयन्ती स्वरूपं तिरोदधती कलादिक्षित्यन्तानां भावानामुपादान-
कारणं च माया ।

(२१) मायाशक्त्येति, स्वातन्त्र्यापरपर्यायया ।

पं० ६ क० पु० संकुचितग्राह्यग्राहकतामिति पाठः ।

गूहयित्वा संकुचितग्राहकतामश्नुते तदा पुरुषसंज्ञः, अयमेव मायामोहितः कर्मबन्धनः संसारी, परमेश्वरादभिन्नोऽपि, अस्य मोहः परमेश्वरस्य न भवेत् – इन्द्रजालमिव, ऐन्द्रजालिकस्य, स्वेच्छया, संपादितभ्रान्तेः, विद्याभिज्ञापितैश्वर्यस्तु, चिद्घनो मुक्तः परमशिव एव । अस्य सर्वकर्तृत्वं सर्वज्ञत्वं पूर्णत्वं नित्यत्वं व्यापकत्वं च, शक्तयोऽसंकुचिता अपि संकोचग्रहणेन कला-विद्या-राग-काल-नियतिरूपतया भवन्ति । अत्र कला-

---

(२२) कर्मबन्धन इति, कर्माणि स्वात्मनो बन्धकानि अभिमन्यमानः।

(२३) संसारीति, संसरति इत्यतः संसारी, देहोऽपि स्वरूपसादृश्यं बाल्ययौवनादिषु अनुवर्तयन् संसरतीव, बुध्यादेस्तु जन्मान्तरेऽपि संसरणम् ।

(२४) विद्याभिज्ञापितैश्वर्यस्तु इति, विद्यया स्वरूपप्रकाशनशक्त्या अभिज्ञापदं प्रापितमैश्वर्यं यस्य, अत एव चिद्घनः शरीराद्यपि विश्वम-चिद्रूपव्यामिश्रणशून्यं संवेदनमेव अभिमन्यमान इत्यर्थः ।

(२५) मुक्त इति, पुनर्जन्मबन्धविरहात् देहे स्थितेऽपि मुक्त इति व्यपदेशयोग्य इति भावः । पतिते तु परमशिवस्वरूप एवेति ।

(२६) नियतिरूपतया भवन्तीति, यथा राज्ञापहृतसर्वस्वस्य अनुकम्पया जीवनार्थं किंचित् स्तोकं धनं दीयते तथैव अणुत्वमापन्नस्य बोधस्य अपहृतसर्वज्ञत्वादेस्तत्स्थाने किंचित्कर्तृतादिपरमार्थं कलादिकं वितीर्यते इति भावः ।

(२७) कलेति, यया सर्वं कर्तुमसमर्थः किंचिदेव घटादिकं करोतीति।



नाम अस्य पुरुषस्य किंचित्कर्तृताहेतुः, विद्या किंचिज्ज्ञत्वकारणम्, रागो विषयेष्वभिष्वङ्गः, कालो हि भावानां भासनाभासनात्मकानां क्रमोऽवच्छेदको भूतादिः, नियतिः ममेदं कर्तव्यं नेदं कर्तव्यम् इति नियमनहेतुः, एतत् पञ्चकम् अस्य स्वरूपावरकत्वात् कञ्चुकमिति उच्यते, महदादि-पृथिव्यन्तानां तत्त्वानां मूलकारणं प्रकृतिः, एषा च सत्त्वरजस्तमसां सा-

---

(२८) विद्येति, यया किंचिदेव पुरोवर्ति घटादिकं जानाति न पुनर्दूरव्यवहितं वस्तु इति ।

(२९) राग इति, अपूर्णमन्यतया इदं मम उपयुज्यते, भूयासं, मा कदाचित् न भूवम् इत्येवंरूपः ।

(३०) क्रमोऽवच्छेदक इति, आज्ञासिषं जानामि ज्ञास्यामि इति, अकार्षं करोमि करिष्यामि इति ज्ञानक्रियास्वरूपेण भावानपि तथा कलयन् अवच्छिनत्ति इति ।

(३१) नियतिरिति, ममेदं कर्तव्यमिति, इदं स्वर्गादिफलकमश्वमेधादिकमेव मया कर्तव्यं न निरयादिफलकं ब्रह्महननादि इति । अथ च नियतादेव कारणान्नियतमेव कार्यमित्यादि बहुविधं नियतिरूपम् ।

(३२) कञ्चुकमिति, स्वरूपाद्व्यतिरिक्तमपि अव्यतिरिक्ततया पूर्णसंवित्स्वरूपमाच्छाद्य स्थितमित्यर्थः ।

(३३) सत्त्वरजस्तमसां सुखदुःखमोहात्मकानां प्रकाशक्रियानियमनस्वभावानां साम्यावस्था सामान्यं रूपं, यत्रैषामङ्गाङ्गिभावो नोपलभ्यत इत्यर्थः ।

स्यावस्था अविभक्तरूपा, निश्चयकारिणी[३४] विकल्पप्रतिबिम्ब[३५]-धारिणी बुद्धिः, अहंकारो नाम – ममेदं न ममेदमित्यभिमानसाधनम्, मनः संकल्पसाधनम्, एतत्त्रयमन्तःकरणम्[३६] । शब्द-स्पर्श-रूप-रस-गन्धात्मकानां विषयाणां क्रमेण ग्रहणसाधनानि श्रोत्र-त्वक्-चक्षुर्जिह्वा-घ्राणानि पञ्च ज्ञानेन्द्रियाणि । वचनादान-विहरण-विसर्गानन्दात्मक्रियासाधनानि परिपाट्या वाक्-पाणि-पाद-पायूपस्थानि पञ्च कर्मेन्द्रियाणि । शब्द-स्पर्श-रूप-रस-गन्धाः सामान्याकाराः पञ्च तन्मात्राणि[३७] । आकाशमवकाशप्रदम्, वायुः संजीवनम्, अग्निर्दाहकः पाचकश्च, सलिलमाप्यायकं द्रवरूपं च, भूमिर्धारिका,

(३४) निश्चयकारिणीति, इदमेतादृक् इत्येवंरूपो निश्चयः ।

(३५) सत्त्वप्रधानत्वेन स्वच्छतया प्रतिबिम्बग्रहयोग्यत्वात् विकल्पप्रतिबिम्बधारिणीति भावः ।

(३६) अन्तर्वेद्यस्य सुखादेर्ग्रहणसाधनत्वात् अन्तःकरणम् । अङ्गाङ्गिभावेन गुणानां कार्यं, वक्ष्यमाणस्य भूतेन्द्रियादेः कार्यवर्गस्य च कारणम् ।

(३७) तन्मात्राणीति, तदेव नाधिकं तत्र अन्यदस्तीति तन्मात्रशब्देनावान्तरविशेषरहिता शब्दाद्या उच्यन्ते ।



‘ यथा[३८] न्यग्रोधबीजस्थः शक्तिरूपो महाद्रुमः ।  
तथा हृदयबीजस्थं विश्वमेतच्चराचरम् ॥ ’

इत्याम्नायनीत्या पराभट्टारिकारूपे हृदयबीजेऽन्तर्भूतमेतज्जगत् । कथं ? – यथा घटशरावादीनां मृद्विकाराणां पारमार्थिकं रूपं मृदेव, यथा वा जलादिद्रवजातीनां विचार्यमाणं व्यवस्थितं रूपं जलादिसामान्यमेव भवति, तथा पृथिव्यादिमायान्तानां तत्त्वानां सतत्त्वं मीमांस्यमानं सदित्येव भवेत्, अस्यापि पदस्य निरूप्यमाणं धात्वर्थव्यञ्जकं प्रत्ययांशं विसृज्य प्रकृतिमात्ररूपः सकार एवावशिष्यते, तदन्तर्गतमेकत्रिंशत्तत्वम्, ततः परं शुद्धविद्येश्वर-सदाशिवतत्त्वानि ज्ञान-क्रियासाराणि शक्तिविशेषत्वात् औकारेऽभ्युपगमरूपेऽनुत्तरशक्तिमयेऽन्तर्भूतानि । अतः परमूर्ध्वाधः सृष्टिरूपो विसर्जनीयः, एवं-भूतस्य हृदयबीजस्य महामन्त्रात्मको विश्वमयो[३९] विश्वोत्तीर्णः परमशिव एवोदयविश्रान्तिस्थानत्वान्निज-

(३८) यथेति, यथा वटबीजे तत्समुचितेनैव वपुषा अङ्कुरपत्रफलानि तिष्ठन्ति एवं नानाविधतनुकरणादिवैचित्र्यशालि विश्वमिदं हृदयबीजान्तःस्थितं । मयूराण्डरसे सर्वशिख्यवयवानुप्रविष्टबर्होपबर्हादिपूर्णरेखादिवैचित्र्यशिल्पकल्पनाकौशलवत् अवधानधनैः सूक्ष्मेक्षिकयावधार्यम् ।

(३९) विश्वमयो विश्वोत्तीर्ण इति, सर्वाकारत्वं निराकारत्वं चात्र क्रमेण हेतुः ।

स्वभावः । ईदृशं हृदयबीजं तत्त्वतो यो वेद समाविशति च स परमार्थतो दीक्षितः प्राणान् धारयन् लौकिकवद्वर्तमानो जीवन्मुक्त एव भवति, देहपाते परमशिवभट्टारक एव भवति ॥

---

(४०) दीक्षित इति, तिलाज्याहुतिवर्जितमेतत्परिज्ञानमेव तत्त्वतो दीक्षा इति भावः ।

---

इति श्रीमन्महामाहेश्वराचार्यवर्यक्षेमराजविरचिता
पराप्रावेशिका समाप्ता ॥

---



सद्विद्यानां संश्रये ग्रन्थविद्वद्-
व्यूहे ह्रासं कालवृत्त्योपयाते ।
तत्तत्सद्धर्मोद्दिधीर्षैकतान-
सत्पक्षौजःशालिना कर्मवृत्त्यै ॥ १ ॥

श्रीमत्कश्मीराधिराजेन मुख्यै-
र्धर्मोद्युक्तैर्मन्त्रिभिः स्वैर्विवेच्य ।
प्रत्यष्ठापि ज्ञानविज्ञानगर्भ-
ग्रन्थोद्धृत्यै मुख्यकार्यालयो यः ॥ २ ॥

तत्राजीवं निर्विशद्भिर्मुकुन्द-
रामाध्यक्षत्वाश्रितैः सद्भिरेषः ।
पूर्त्या शुद्ध्या व्याख्यया संस्कृतः स्तात्
पूर्णो ग्रन्थः श्रेयसे सज्जनानाम् ॥ ३ ॥

(तिलकम्)

---

श्रीस्वात्मशिवार्पणं शिवदं च बोभवीतु अध्येतृश्रोतृविमृष्टॄणाम् ॥

---

## प्रस्तावना ।

ईषदूनं वर्षद्वयं जातं यत्परमशिवभक्तैर्विद्वच्छ्रेष्ठैः प्रातस्स्मरणीयैर्मत्पितृचरणैर्निरतिशयभक्तिसहकारेणानल्पायासेन च काश्मीरनगरात् तुरीयाश्रमस्थस्योदासीनस्य श्रीमद्गोविन्दानन्दस्यातिप्रयत्नद्वारा संगृह्य सुप्रसिद्धस्य सी०आई०ईति संज्ञया राजसम्मानितस्य राजोपाधिभूषितस्य श्रीयुतपण्डितसूर्य्यकौलस्यातियोग्यस्य सूनोः काश्मीराधिपतेः प्रधानामात्यस्य कौलोपाह्वश्रीयुतपण्डितदयाकृष्णस्य परमसाहाय्येन च लेखयित्वाऽतिरमणीयस्यास्य ग्रन्थस्य मुद्रापणे प्रवृत्तैरभूयत । दुर्लभातिप्राचीनसंस्कृत-ग्रन्थानां लोके प्रचारणार्थं कृतोद्योगः श्रीयुतहरिदासगुप्तश्च ग्रन्थ-...मं कृपया स्वकीये "चौखम्भा-संस्कृत-सीरीसाख्ये" काव्यसंग्रहे मुद्र-...ा प्रकाशयितुं स्वीकृतवान् । परन्त्वस्मद्भाग्यदोषात्कतिपयान्येव ...ो मुद्राप्य तातपादा ... इहलोकं परित्यज्य शिवैकतां गताः । आर-...गस्यास्यासाधारणभक्तिरसपूर्णस्यास्मत्पित्रा परमसमादृतस्य चास्य ग्रन्थस्य मुद्रणं यथाकथञ्चित् समापनीयमेवेति मत्वात्यल्पबुद्धिरप्यहमत्र समापनकार्ये उद्युक्तोऽभवम् । देवादिदेवस्य श्रीकाशीपतेः परमकारुणिकदृष्ट्या ग्रन्थोऽयं कथमप्यद्य समाप्तिमगमदित्यात्मनः कृतकृत्यतां मन्ये । उपकृतोऽस्म्यस्य शोधने नित्यं वेदान्तानुशीलनशीलेन परमदेवनिष्ठेन साधुना पण्डितेन बापटोपाह्वश्रीयुतयज्ञेश्वरशास्त्रिणा । ग्रन्थकर्त्तुस्तट्टीकाकर्तुश्च जीवनवृत्तान्तस्य जिज्ञासा भवेत् सहृदयानां पाठकजनानामिति मत्वा तं लब्धुं मत्प्रार्थनया मित्रं मे कृतविद्योऽतिसज्जनः काश्मीरराजधान्यां विद्याविभागेऽध्यक्षपदप्राप्तः श्रीयुतजगदीशचन्द्रचट्टोपाध्यायः मासद्वयादधिकं तत्र प्रवृत्तोऽभूत् । किन्तु नानोपायेन बहुप्रयत्ने कृतेऽपि तस्यालाभादत्र न दातुं समर्थोऽहमिति खिन्नोऽस्मि । आदर्शपुस्तकस्यैकस्यैव प्राप्तत्वान्मम चाल्पविद्यत्वान्मुद्रणदोषाच्च पुस्तकेऽस्मिन् भ्रान्तयोऽनेका भवेयुस्तास्सर्वाः संशोधयित्वा ग्रन्थस्यास्य रसं गृहीत्वा भक्तजनाः समुल्लसन्तुतरां श्रमं च मे सफलीकुर्वन्त्वित्यहं प्रार्थये पाठकवृन्दानां कृपापात्रम्

श्रीकाश्यां,
द्व्यधिकैकोनविंशतिशततमे
कृष्टीयाब्दे ।

श्रीकालीचरणमित्रः ।



## ॐ तत्सत्

ॐ न ध्यायतो न जपतः स्याद्यस्याविधिपूर्वकम् ।
एवमेव शिवाभासस्तं नमो भक्तिशालिनम् ॥१॥

ॐ तत्सत् । श्रीविघ्नहर्त्रे नमः । श्रीगुरवे शिवायै नमः । ॐ उद्धरत्यन्धतमसाद्विश्वमानन्दवर्षिणी । परिपूर्णा जयत्येका देवी चिच्चन्द्रचन्द्रिका ॥ अस्थितोस्मि बहुभिर्बहुशो भक्तिशालिभिः । व्याकरोमि मनाक् श्रीमत्प्रत्यभिज्ञाकृतः स्तुतीः ॥ ईश्वरप्रत्यभिज्ञाकारो वन्द्याभिधानः श्रीमदुत्पलदेवाचार्योऽस्मत्परमेष्ठी सततसाक्षात्कृतस्वात्ममहेश्वरः स्वं रूपं तथात्वेन परामृष्टुमर्थिजनानुजिघृक्षया संग्रहस्तोत्रजयस्तोत्रभक्तिस्तोत्राण्याह्निकस्तुतिसूक्तानि च कानिचिन्मुक्तकान्येव बबन्ध । अथ कदाचित्तानि तद्व्यामिश्राणि लब्ध्वा श्रीराम आदित्यराजश्च पृथक् पृथक् स्तोत्रशय्यायां न्यवेशयत् । श्रीविश्वावर्तस्तु विंशत्या स्तोत्रैः स्वात्मोत्प्रेक्षितनामभिर्व्यवस्थापितवानिति किल श्रूयते । तदेतानि संग्रहादिस्तोत्राणि सूक्तान्येव प्रसिद्धवार्तिकशय्योपारूढानि स्पष्टं व्याकुर्मः । मोक्षलक्ष्मी-
[illegible]



श्लाघमान …
भक्तिचमत्कारवश…
भिन्नशिवावेशमया भवाम इति यावत्। "एवमेव" इत्यनेन सूचितमलौकिकक्रमं दर्शयति "न ध्यायत" इत्यादिना। सर्वस्य हि ध्यानजपप्रमुखं ध्येयजप्यस्वरूपं नियताकारमेव प्रथते, भक्तिशालिनस्त्वनुपायमेव निराकारं सर्वाकारं चिदानन्दघनं शिवात्मस्वरूपं सर्वदा स्फुरति। अत एवाह "अविधिपूर्वक"मिति। विधीयत इति विधिरिज्याध्ययनादिः पूर्वः कारणं यत्र। तथाकृत्वा सर्वविधीनां संकुचितत्वादसंकुचितस्वरूपं प्रत्युपायत्वाभावात् तत्त्वसमावेशधनैरेव प्रतिभाप्रसादनप्रमुखमाप्यते। यथोक्तम् श्रीपूर्वशास्त्रे "न चात्र विहितम् किञ्चि"दित्यादि, "अकिञ्चिच्चिन्तकस्ये"त्यादि, गीतास्वपि "मय्यावेश्ये"त्यादिकं। ध्यानजपाभ्यां प्रकाशविमर्शस्वरूपाभ्यां पूजनहवनादि सर्वं संगृहीतमिति प्राधान्यात्तावेवेहोक्तौ ॥ १ ॥

**आत्मा मम भवद्भक्तिसुधापानयुवाऽपि सन् ।**
**लोकयात्रारजोरागात्पलितैरिव धूसरः ॥२॥**

"आत्मे"ति। हे महेश्वर ममात्मा जीवो भवद्भक्तिसुधापानेन युवा समुत्तेजितसहजौजःप्रकर्षोऽपि सँल्लोकयात्रयैव रजसा लोकव्यवहारधूल्या कृतो यो राग उपरागस्ततो हेतोर्यानि पलितानि जराप्रकारास्तैर्धूसरो विच्छाय इव न तु वस्तुवृत्तेन, भक्तिसुधापानेन नित्यतरुणीकृतत्वात्, यथा च तरुणस्य धूलिधूसरतया सञ्जातपलितमिव …



दधाति अपि तु विनोदहासरसचमत्कारमेव पुष्णाति तथा लोकव्यवहारो ममेति रूपकोपमया ध्वनति। पूर्वश्लोके आमन्त्रणपदाभावाद्भवद्भक्तीति न सङ्गतमेवेति कथमियँ स्तोत्रशय्येति श्रीविश्वावर्त एव प्रष्टव्यः वयं तु सूक्तव्याख्यानोद्यताः ॥ २ ॥

**लब्धत्वत्संपदां भक्तिमतां त्वत्पुरवासिनाम् ।**
**सञ्चारो लोकमार्गेऽपि स्यात्तयैव विजृम्भया ॥३॥**

"लब्धत्व"दिति। ये समावेशमयप्रशस्तभक्तियुक्ताः अत एव लब्धत्वत्संपदः त्वत्पुरे विश्वपूरके त्वत्स्वरूपे वसन्ति तच्छीलाः तेषां लोकमार्गे ऽपि यः सञ्चारो व्यवहारः स तयैव समावेशरसानन्दमय्या विजृम्भया विकस्वरतया स्यात् भवत्येव। अथ च ये लब्धलौकिकश्रियः त्वद्भक्ताः त्वन्मण्डलवासिनः ते सर्वे स्पृहणीयत्वात् सदा विभूतिमुदिता इति समासोक्त्या गमयति ॥ ३ ॥

**साक्षाद्भवन्मये नाथ सर्वस्मिन् भुवनान्तरे ।**
**किं न भक्तिमतां क्षेत्रं मन्त्रः क्वैषां न सिद्ध्यति ॥४॥**

"साक्षाद्भव"दिति। भक्तिमतां व्याख्यातरूपभक्तिशालिनां सर्वत्र भुवनविषये किं न क्षेत्रं परसिद्धिसमुदयस्थानं क्व च एषां मननत्राणधर्मा मन्त्रो न सिद्ध्यति यतः साक्षादिति समावेशदृष्ट्या न कथामात्रेण भवन्मयमेव सर्वं भुवनमेषाम् ॥४॥

**जयन्ति भक्तिपीयूषरसासववरोन्मदाः ।**
**अद्वितीया अपि सदा त्वद्द्वितीया अपि प्रभो ॥५॥**

जयन्ति भक्ति इति। भक्तिपीयूषरस एवासववरः उत्कृष्टं पानं तेन उद्गतहर्षाः ये ते जयन्ति सर्वोत्कर्षेण वर्तन्ते कीदृशाः

अद्वितीया असाधारणस्वरूपा अपि त्वद्वितीयाः त्वमेव द्वितीयस्तुल्यरूपो येषां अथ च त्वद्वितीया अपि भक्तिसमावेशेनात्यन्तमभेदासाधनत्वात्त्वमेव द्वितीयः प्रभुत्वेन परिशीलितो येषां तथाभूता अपि अद्वितीयाः विश्वाभेदिनः । अद्वितीयाश्च कथं त्वद्वितीयाः त्वद्वितीयाश्च कथमद्वितीया इति विरोधच्छाया ॥५॥

**अनन्तानन्दसिन्धोस्ते नाथ तत्त्वं विदन्ति ते ।**
**तादृशा एव ये सान्द्रभक्त्याऽऽनन्दरसाप्लुताः ॥६॥**

भक्त्यानन्दरसः समावेशानन्दप्रसरस्तेन प्लुता आर्द्राशयाः अत एव तादृशा इति अपरिमितानन्दरससमुद्रत्वात्त्वद्रूपसरूपाः तव तत्त्वं जानन्ति । यो हि यत्र विद्वान् स हि तद्वेत्त्येव ॥६॥

**त्वमेवात्मेश सर्वस्य सर्वश्चात्मनि रागवान् ।**
**इति स्वभावसिद्धां त्वद्भक्तिं जानञ्जयेज्जनः ॥७॥**

त्वमेवात्मेश इति । सर्वस्तावदात्मने स्पृहयालुः वस्तुतस्तु त्वमेव चिद्रूपोऽस्यात्मा इति अतस्त्वय्यात्मनि स्वतःसिद्धा भक्तिः केवलं समावेशशक्त्या तां जानाति तज्जयेत् सर्वोत्कर्षेण वर्तत एव नियोगे लिङ् ॥ ७ ॥

**नाथ वेद्यक्षये केन न दृश्योऽस्येककः स्थितः ।**
**वेद्यवेदकसंक्षोभेऽप्यसि भक्तैः सुदर्शनः ॥८॥**

नाथ वेद्यक्षय [illegible]
कस्य नाम स्व [illegible]
पातेऽपि वेद्यवे [illegible]
शकाष्ठाधिवासितैर्हि सततमेभिः "भोक्तैव भोग्यरूपेण सदा सर्वत्र संस्थित" इति नीत्या शिवमयमेव विश्वमीक्ष्यते । वेद्यविलापनप्रया-



सव्युदासाय सुशब्दः । तदुक्तं श्रीपूर्वशास्त्रे "मोक्षोपायमनायासलभ्य"मिति ॥ ८ ॥

**अनन्तानन्दसुरसी देवी प्रियतमा यथा ।**
**अवियुक्तास्ति ते तद्वदेका त्वद्भक्तिरस्तु मे ॥९॥**

अनन्तानन्द इति । उपमाश्लेषोक्त्या परमेश्वरसाम्यमाशास्ते । भक्तिपक्षे देवी द्योतमाना एका फलाकांक्षाविरहिता । अपरत्र क्रीडादिशीला परैव शक्तिः । अहं भक्त्या अवियुक्तः स्यामिति वक्तव्ये मम अवियुक्तास्तु इति भक्तिं प्रति प्रेमप्रसरः प्रकाशितः ॥ ९ ॥

**सर्व एव भवल्लाभहेतुर्भक्तिमतां विभो ।**
**संविन्मार्गोऽयमाह्लाददुःखमोहैस्त्रिधा स्थितः ॥१०॥**

सर्व एव भवल्लाभ इति । व्याख्यातप्रकृष्टभक्तिशालिनां अयमाह्लाददुःखमोहैरुपलक्षितो लोके यः संविन्मार्गः नीलपीतादिबोधरूपः पन्थाः स्थितः स सर्व एव त्वत्प्राप्तिहेतुः । वेद्यसोपाननिमज्जनक्रमेण परमवेदकभूमिलाभात् ॥ १० ॥

**भवद्भक्त्यमृतास्वादाद्बोधस्य स्यात्परापि या ।**
**दशा सा मां प्रति स्वामिन्नासवस्येव शुक्तता ॥११॥**

हे स्वामिन् त्वच्छक्तिपातसमावेशमयभक्त्यानन्दास्वादमनासाद्य बोधस्य परा देहपातप्राप्या प्रकृष्टाऽपि या शान्तशिवपदात्मा दशा स्यात् कैश्चित् सम्भाव्यते सा तैः सम्भाव्यमाना मां प्रति आसवस्य यथा शुक्तता पर्युषितता तथा भातीति यावत् । यतस्तैर्भक्त्यमृतमनास्वाद्यैव शुक्तीकृतं । यैः पुनरास्वाद्यते तैः स्वचमत्कारानन्दवि[illegible]का शुक्ततासम्भावना । आ-



स्वादादिति ल्यब्लोपे पञ्चमी। अथ वा त्वद्भक्त्यमृतास्वादादपि परा मोक्षरूपा या काचिद्दशास्तीति सम्भाव्यते सा मह्यं न रोचते भक्त्यमृतास्वादस्यैव निरतिशयचमत्कारवत्त्वादिसेवं परमेतत् ॥ ११ ॥

भवद्भक्तिमहाविद्या येषामभ्यासमागता।
विद्याऽविद्योभयस्यापि त एते तत्त्ववेदिनः ॥१२॥

भवद्भक्ति इति। विद्याविद्योभयस्यापीति विद्याऽविद्यालक्षणस्योभयस्य तत्र शिवमन्त्रमहेश्वरमन्त्रेश्वरमन्त्रात्मनो विद्यारूपस्य विज्ञानाकलप्रलयाकलसकलतद्वेद्यात्मनश्च अविद्यारूपस्योभयस्यापि तत्त्वं विदन्ति येषां त्वद्भक्तिरेव महाविद्या प्रकर्षं प्राप्ता। महत्पदेन शब्दविद्यातोऽपि भक्तेरुत्कर्षात्तत्तत्त्ववेदकत्वम् ॥ १२ ॥

आमूलाद्वाग्लता सेयं क्रमविस्फारशालिनी।
त्वद्भक्तिसुधया सिक्ता तद्रसाढ्यफलाऽस्तु मे ॥१३॥

आमूलाद्वागिति। मूलं पराभूमिः, क्रमविस्फारित्वं पश्यन्त्यादिप्रसरः, तद्रसो भक्त्यानन्दरस एव आढ्यं स्फीतं त्वदात्म्यैक्यापत्तिलक्षणं फलं यस्याः ॥ १३ ॥

शिवो भूत्वा यजेतेति भक्तो भूत्वेति कथ्यते।
त्वमेव हि वपुःसारं भक्तैरद्वयशोधितम् ॥१४॥

शिवोभूत्वा इति। "शिवो भूत्वा शिवं यजे"दिति यदाम्नायेपूच्यते तत्र देहपात एव शिवतेति ये मन्यन्ते तेषां सति देहे शिवीभावाभावाद्यजमानतानुपपत्तेः स्वस्वरूपशिवसमावेशभक्तिशाल्येव यजनं जानातीतिता[illegible]र्यम् अनेनैवाशयेनाह त्वमेव यतः



सारमुत्कृष्टं वपुः स्वरूपं अद्वयेन भेदशङ्काशङ्कुशतशातिना शोधितं निर्मलीकृतं भक्तैरिति ॥ १४ ॥

भक्तानां भवदद्वैतसिद्ध्यै का नोपपत्तयः।
तदसिद्ध्यै निकृष्टानां कानि नावरणानि वा ॥१५॥

व्याख्यातानां भक्तानां भवदद्वयसाधनाय का न युक्तयः यतो मूढैरुदीर्यमाणान्यपि शिवाद्वयदूषणानि दूषयत्स्वभावचिद्रूपशिवस्वरूपसिद्धिं विना न कानिचित् स्युरिति युक्त्या भक्तानां साधनान्येव पर्यवस्यन्ति। निकृष्टानां तु भेदमयानां तदसिद्ध्यै शिवाद्वयसाधनाभावाय कानि नावरणानि तीक्ष्णतमयुक्त्यस्त्राण्यपि समावेशरसविप्रुषोऽप्यनभिज्ञत्वादसञ्चेतसमानानि महान्धकारपातयितॄण्येव ॥ १५ ॥

कदाचित्क्वापि लभ्योऽसि योगेनेतीश वञ्चना।
अन्यथा सर्वकक्ष्यासु भासि भक्तिमतां कथम् ॥१६॥

कदाचिदिति। कदा चित् कस्यां चित् समाधिदशायां, क्वापि हृदयचक्रादौ, योगेन चित्तवृत्तिनिरोधेन, ईश स्वामिन्, असि त्वं लभ्य इत्येषा वञ्चना। अन्यथा समाधिव्युत्थानाद्यभिमतासु कक्ष्यासु कथं भक्तिमतां प्रकाशसे ॥ १६ ॥

प्रत्याहाराद्यसंस्पृष्टो विशेषोऽस्ति महानयम्।
योगिभ्यो भक्तिभाजां यद्व्युत्थानेऽपि समाहिताः ॥१७॥

विषयेभ्य इन्द्रियाणां प्रत्यावृत्त्य नियमनं प्रत्याहारः आदिशब्दाद्ध्यानधारणादयः तैरसंस्पृष्टः अकदर्थितः तन्निष्ठेभ्यो योगिभ्यो महानसामान्यः विशेषः अतिशयो भक्तिभाजामस्ति य-



देते योग्यपेक्षया व्युत्थानाभिमते ऽपि समये समाहिताः "मय्यावेश्य मनो ये मा"मिति गीतोक्तनीत्या नित्ययुक्ताः ॥ १७ ॥

**न योगो न तपो नार्चाक्रमः कोऽपि प्रणीयते ।**
**अमाये शिवमार्गेऽस्मिन् भक्तिरेका प्रशस्यते ॥१८॥**

न योगो न इति । शिवमार्गे परे शाक्ते पदे अस्मिन्निति निरतिशये स्वानुभवैकसाक्षिके मायीयनियतयोगाद्युपायपरिपाटी न काचिदुपदिश्यते तस्याः मायामयत्वेन अन्धतमसप्रख्यायास्तत्र शुद्धविद्याप्रकाशातिशायिन्युपायत्वाभावात् भक्तिरेव प्रतिभाप्रसादनात्मा उक्तचरी प्रशस्यते उपायत्वेनोच्यते ॥१८॥

**सर्वतो विलसद्भक्तितेजोध्वस्तावृतेर्मम ।**
**प्रत्यक्षसर्वभावस्य चिन्तानामापि नश्यतु ॥१९॥**

सर्वतोविलसदिति । अन्तर्बहिश्च विलसता जृम्भमाणेन भक्तितेजसा समावेशप्रकाशेन ध्वस्ता आवृतिः अख्यातिर्यस्य तत एव मायीयभूमिविस्मृतेः प्रत्यक्षभैरवमुद्राप्रवेशयुक्त्या आलोचनमात्रगोचरीभूताः सर्वे भावाः यस्य तस्य मम चिन्ताया विकल्पवृत्तस्य नामा ऽपि अभिधानमपि नश्यतु नित्यमेव साक्षात्कृतपरभैरवस्वरूपानुप्रविष्टो भूयासमित्यर्थः ॥ १९ ॥

**शिव इत्येकशब्दस्य जिह्वाग्रे वसतः सदा ।**
**समस्तविषयास्वादो भक्तेष्वेवास्ति कोप्यहो ॥२०॥**

शिव इत्येक इति । उक्तेष्वेव भक्तेषु यो महाप्रकाशमयनिजस्वरूपपरामर्शात्मा शिव इत्येकः असामान्यः सदा शिवोस्ति अहो आश्चर्यं तस्य शब्दमात्रस्याप्येककस्य विषयस्य परमानन्दव्याप्तिदायित्वात्समस्तविषयास्वादो जगदानन्दचमत्कारः को-



ऽपि स्वानुभवसिद्धोऽस्ति एकत्र च शब्दलक्षणे विषये जिह्वाग्रवर्तिनि समस्तविषयास्वाद इति विरोधच्छाया ॥ २० ॥

**शान्तकल्लोलशीताच्छस्वादुभक्तिसुधाम्बुधौ ।**
**अलौकिकरसास्वादे सुस्थैः को नाम गण्यते ॥२१॥**

शान्तकल्लोल इति । शान्ताः निवृत्ताः विकल्पमयाः कल्लोला यत्र तथाभूते, संसारतापापूर्णत्वाच्छीते, विश्वप्रतिबिम्बाश्रयत्वादच्छे निर्मले, आनन्दविकासित्वात्स्वादौ, भक्त्यमृतसमुद्रे, अलौकिकरसास्वादे समावेशचमत्कारे, सुखेन तिष्ठन्ति सुस्थाः, तैः भेदगलनात् को नाम गण्यते, तदा व्यतिरिक्तस्य कस्य चिद्प्यप्रतिभासात् । सुखस्थिताः न किञ्चिद्गणयन्तीत्युचितैवोक्तिः ॥ २१ ॥

**मादृशैः किं न चर्व्येत भवद्भक्तिमहौषधिः ।**
**तादृशी भगवन्यस्या मोक्षाख्योऽनन्तरो रसः ॥२२॥**

मादृशैरिति । मादृशैः भक्तितत्त्वज्ञैः, तादृशी इति अलौकिकी भवद्भक्तिरेव अभीष्टप्रदत्वान्महौषधिः, किं न चर्व्येत किं न धार्येत विचारेणास्वाद्येत इति यावत् । कीदृशी । यस्याश्चर्वणपरामर्शानन्तरमेव जीवन्मुक्ताख्यः अनन्तरः अव्यवहितो रसश्चर्वणानन्दः ॥ २२ ॥

**ता एव परमर्थ्यन्ते सम्पदः सद्भिरीश याः ।**
**त्वद्भक्तिरससम्भोगविस्रम्भपरिपोषिकाः ॥२३॥**

ता एव इति । सद्भिः भक्तिशालिभिः ता एवेति असमत्वत्समावेशमय्यः सम्पदः परं केवलमर्थ्यन्ते न तु अणिमाद्याः । कीदृश्यो याः त्वद्भक्तिरससम्भोगे [illegible]त्समावेशामृतचमत्कारे विस्र-

म्भं स्वैरं स्वीकारं पुष्णन्ति । अत्र प्रियासम्भोगपोषिका एव सर्वस्य सम्पदोऽर्थनीया इत्यनुरणनव्यङ्ग्योपमाध्वनिः ॥ २३ ॥

**चित्रं निसर्गतो नाथ दुःखबीजमिदं मनः ।**
**त्वद्भक्तिरससंसिक्तं निःश्रेयसमहाफलम् ॥२४॥**

चित्रं निसर्ग इति । नाथ स्वामिन् इदं चित्रं दुःखकारणमिदं मनः सर्वस्य हेयं यदभिमतं तदेव त्वद्भक्तिरसायनेन सिक्तं परमानन्दमोक्षमहाफलम् । न हि कदाचिल्लोकं प्रति विषादेः मधुर आस्वादः अतस्त्वद्भक्तेरेवायमलौकिकः क्रम इति ध्वनित इति शिवम् ॥ २४ ॥

इति श्रीमदीश्वरप्रत्यभिज्ञाकाराचार्यचक्रवर्तिवन्द्याभिधानोत्पलदेवाचार्यविरचिते भक्तिविलासाख्ये प्रथमस्तोत्रे महामाहेश्वर-श्रीक्षेमराजविरचिता विवृतिः ॥ प्रथमम् १ ॥

---

ॐ तत्सत्

अथ सर्वात्मपरिभावनाख्यं द्वितीयं स्तोत्रम् ।

**अग्नीषोमरविब्रह्मविष्णुस्थावरजङ्गम–।**
**स्वरूप बहुरूपाय नमः संविन्मयाय ते ॥ १ ॥**

अग्नीषोमरविभिः दाहाप्यायप्रकाशकारीच्छाक्रियाज्ञानरूपस्य शक्तित्रयस्य, ब्रह्मविष्णुभ्यामधिष्ठातृदेवतावर्गस्य, स्थावरजङ्गमाभ्यामधिष्ठितस्य प्रमेयप्रमातृराशेश्च स्वीकृतत्वाद्विश्वात्मनः आमन्त्रणमिदं स्वरूपेत्यन्तं । तेन अग्नीषोमरविब्रह्मविष्णुस्थावर-जङ्गमस्वरूप हे परमेश्वर । प[illegible]भूतानि जङ्गमानामपि भूतदेहत्वात् । एवं च अग्निसोमसूर्यस्थावरज[illegible] अष्टमूर्तितया । ब्रह्मविष्णूपल-



क्षिताऽशेषाधिष्ठातृतया विश्वमयत्वम् । अत एव बहुरूपायेत्युक्तम् । एवं विश्वरूपत्वेऽपि प्रधानमस्य स्वरूपमाह संविन्मयायेति । एतदेव हि संविन्मयत्वं यत्स्वातन्त्र्योल्लासिताशेषविश्वनिर्भरत्वम् ॥ १ ॥

**विश्वेन्धनमहाक्षारानुलेपशुचिवर्चसे ।**
**महानलाय भवते विश्वैकहविषे नमः ॥ २ ॥**

विश्वेन्धन इति । भवते महानलाय परमप्रमातृवह्नये नमः । कीदृशाय । विश्वस्य भेदराशेरिन्धनरूपस्य सम्बन्धि यन्महाक्षारं भस्म तत्संहारशेषः संस्कारः, तेन यदनुलेपनम् संस्कारसंहारेणापि प्रमात्रुत्तेजनं, शुचि शुद्धमद्वयरूपं वर्चस्तेजो यस्य तस्मै । अथ "शुचिर्नामाग्निरुदितः संघर्षात्सोमसूर्ययो"रित्यागमिकभाषया शुचिनाम्ने तेजसे । विश्वमेकं हविः यस्येत्यनेन असन्तदीप्तत्वमुच्यते । श्रीमतङ्गाद्यागमस्थसा रहस्यचर्यार्थस्यात्र सूचनाद्विरोधच्छायाऽपि ॥ २ ॥

**परमामृतसान्द्राय शीतलाय शिवाग्नये ।**
**कस्मै चिद्विश्वसंप्लोषविषमाय नमोऽस्तु ते ॥३॥**

प[illegible]मृत इति । चिदानन्दघनत्वात्परमामृतसान्द्रत्वम् । [illegible]त्वाच्छीतलत्वम् । अग्नेश्च कथमार्द्रत्वशीतलत्वे इति यस्य न[illegible]च्छाया । कस्मै चिदित्यलौकिकस्वरूपाय ॥ ३ ॥

नमः [illegible]य रुद्राय शङ्कराय शिवाय ते ।
[illegible]कोत्तरः पूज्याऽपि नमः कस्मै चिन्मन्त्रमूर्तये ॥४॥

[illegible]ायेति महा[illegible]ष्ट्यादिक्रीडापरः विश्वोत्कर्षशालितया विजिगीषुः [illegible]मश्वराचर[illegible]तेः द्योतमानः सर्व[illegible] स्तोतव्यो गन्तव्यश्च [illegible]त्वर्थत्वात् । [illegible] [illegible]त्यालीनार्गाि सर्गादि-
[illegible]प्रालिङ्गन[illegible]

हेतुत्वात् विश्वस्य । चित्पदे रोदनाद्द्रावणाच्च रुद्रः । पूर्णाऽहन्तापरामर्शमयत्वान्मन्त्रमूर्तिः ॥ ४ ॥

**नमो निकृत्तनिःशेषत्रैलोक्यविगलद्वसा- ।**
**ऽवसेकविषमायाऽपि मङ्गलाय शिवाग्नये ॥५॥**

... निकृत्त इति । निकृत्तं अख्यातिलक्षणान्मूलात्प्रभृति ... भवाभवातिभवलक्षणं यत्त्रैलोक्यं तत्संबन्धिनी ... नररससाररूपा या वसा तत्कृतो योऽवसेकः ... त्यन्तं जाज्वल्यमानाय अत एव संसारामङ्ग... स्य शिववह्नये नमः । शरीरप्राणादिपरिमितप्र... ाम इत्यर्थः । सर्ववसावसेकविषमः श्माशानिक... विरोधच्छाया ॥५॥

**समस्तलक्षणायोग एव ... ापलक्षणम् ।**
**तस्मै नमोऽस्तु देवाय कस्मै चिदपि शम्भवे ॥६॥**

समस्तलक्षणेति । समस्तानां लक्षणानामभिज्ञानानां च तथाऽधिगमहेतूनामुच्चारकरणध्यानादीनां यः अयोगः असम्बन्धः स एव यस्य उप इत्यात्मसमीपे लक्षणं हृदयङ्ग... समस्तचिन्ताविस्मरणस्यैव तत्प्राप्तिहेतुत्वात् अत एव व... ७ ॥ ...द्रेति संवृतिवक्रतया स्वात्मविस्फुरद्रूपायेति ध्वनति ॥ ... ानरू-

**...दागमस्वविरुद्धाय वेदागमविधायिने । ... स्थावर**
**...दागमसतत्त्वाय गुह्याय स्वामिने नमः ... ्वात्मनः**

... ्णुस्थावर-
वेदाश्च इति ... ृतदेहत्वात् ।
...द्रः यश्चश्चद्रिरू ... मविष्णूपल-



र्थस्तु स्वातन्त्र्याज्जगदुत्तिष्ठापयिषुर्वेदं विधत्ते वेदान्तदृष्ट्या तत्परमार्थरूपश्च अत एव सर्वस्य अविषयत्वाद्गुह्यः ॥ ७ ॥

**संसारैकनिमित्ताय संसारैकविरोधिने ।**
**नमः संसाररूपाय निःसंसाराय शम्भवे ॥८॥**

मायादेः क्षिप्यन्तस्य संसारस्य एक एव निमित्तं तस्य विरोधी संहर्ता स एव । तथा संसाररूपतया भाति न पुनश्चिद्रूपशिवव्यतिरिक्तं संसारस्य निजरूपं किं चित् । एवमपि संसारान्निष्क्रान्तं निःसंसारं तेनासंस्पृष्टरूपमिति विरोधाभासः ॥८॥

**मूलाय मध्यायाग्राय मूलमध्याग्रमूर्तये ।**
**क्षीणाग्रमध्यमूलाय नमः पूर्णाय शम्भवे ॥९॥**

मूलायेति । विश्वस्य कारणत्वात्स्वरूपत्वाद्विश्रान्तिस्थानत्वाच्च मूलं मध्यमग्रं च । यथा पृथक् मूलादिरूपः तथा युगपदपि अक्रमानन्तविश्वरूपत्वात् । न चास्य स्वात्मनि मूलादि किञ्चिच्चिन्मात्रैकरूपत्वात् । अत एव सर्वसहत्वात्पूर्णः । विरोधाभासः प्राग्वत् ॥९॥

**...मः सुकृतसंभारविपाकः सकृदप्यसौ ।**
**यस्य नामग्रहः तस्मै दुर्लभाय शिवाय ते ॥१०॥**

नमः सुकृत इति । यस्य सकृदेव नामग्रहः असाविति लोकोत्तरः पूर्णविश्रान्तिप्रदत्वात्पुण्यराशेः परिपाकः । तस्मै दुर्लभायेति महायोगिगम्याय नमः ॥ १० ॥

**...मश्चराचराकारपरेतनिचयैः सदा ।**
**...प्रालिङ्गन्त्यापि ...स्मै ...न्मयाय कपालिने ॥ ...मः २०**

नमश्चराचरा इति। कपालिव्रतित्वं यद्भगवति प्रसिद्धं तत्त्वतो व्यनक्ति। चराचराकाराः जङ्गमस्थावररूपाः ये परेताः परं चिन्मयस्वरूपं इताः प्राप्ताः। तद्विना च निर्जीवत्वादपि परेताः। तेषां निचयैः सदा युगपच्च क्रीडते तत्संयोजनवियोजनवैचित्र्यसहस्रविधायिने चिन्मयाय चित्परमार्थाय कपालिने निःशेषकपालयुक्ताय अस्थिशेषीभूतविश्वधारिणे नमः ॥११॥

मायाविने विशुद्धाय गुह्याय प्रकटात्मने।
सूक्ष्माय विश्वरूपाय नमश्चित्राय शम्भवे ॥१२॥

मायाविने इति। भेदोल्लासहेतुः स्वातन्त्र्यशक्तिः माया यस्यास्ति स चिद्रूपत्वाद्विशुद्धः। मायावी व्याजी च कथं विशुद्ध इति विरोधाभासः। एवमन्यत्र। गुह्यः सर्वस्यागोचरः। प्रकटः प्रकाशघनस्वात्मरूपः। सूक्ष्मो ध्यानादिनिष्ठैरप्यलक्ष्यः। विश्वरूपः स्वातन्त्र्याद्गृहीतविश्वाकारः। अत एव चित्रो विचित्र आश्चर्यरूपश्च ॥ १२ ॥

ब्रह्मेन्द्रविष्णुनिर्व्यूढजगत्संहारकेलये।
आश्चर्यकरणीयाय नमस्ते सर्वशक्तये ॥१३॥

ब्रह्मेन्द्र इति। ब्रह्मेन्द्रविष्णुभिः सृष्ट्यधिष्ठितिस्थितिकरैः कथमपि निर्वाहितत्वाद्यत् निर्व्यूढं संपन्नं जगत्। तस्य सर्वैः सन्धार्यमाणस्य संहारः क्रीडामात्रं यस्य। अत एव आश्चर्यकरणीयः सर्वशक्तिः ब्रह्मादीनामपि स्वकर्मण्येतदीयसंजिहीर्षाभावाभावमुखप्रेक्षित्वात् सर्वसामर्थ्ययुक्तो यस्तस्मै नमः ॥१३॥

तटेष्वेव परिभ्रान्तैः लब्धास्तास्ता विभूतयः।
[illegible] तस्मै नमस्तुभ्यमगा[illegible] [illegible]विष्णूपल-



तटेष्वेव इति। तटेष्वेव मन्त्रमुद्राचक्रभूमिकादिज्ञानेषु चिद्रसप्रसरबाह्यभूमिषु परिभ्रान्तैः। "पवनभ्रमणप्राणविक्षेपादिकृतश्रमाः कुहकादिषु ये भ्रान्ता भ्रान्तास्ते परमे पदे" इत्याम्नायस्थित्या अन्तःसारानासादनाद्भ्राम्यद्भिः। तास्ता इति भेदमय्योऽणिमादिकाः। अगाधहरासिन्धवे इति अपरिच्छेद्यान्तस्तत्त्वाय महेश्वरसमुद्राय। समुद्रे च तटेष्वेव ये भ्राम्यन्ति ते तन्मौक्तिकाद्याप्नुवन्ति, ये तु अन्तर्विक्षेपक्षमाः ते महानिर्घातिमदममृतमप्यश्नन्तीति रूपकश्लेषेण ध्वनति ॥१४॥

मायामयजगत्सान्द्रपङ्कमध्याधिवासिने।
अलेपाय नमः शम्भुशतपत्राय शोभिने ॥१५॥

मायामय इति। माया चिन्मयत्वाख्यातिः सैव प्राकृतं रूपं यस्य जगतः तदेव सान्द्रः पङ्को घनः कर्दमः तन्मध्याधिवासिनेऽपि व्यापकत्वात्तद्व्याप्नुवतेऽपि अलेपाय शुद्धचिदेकरूपाय। शम्भुरेव शतपत्रं अनन्तशक्तिदलं तत्तत्सङ्कोचविकासधर्मकं कमलं तस्मै नमः। पङ्कमध्यस्थितेरप्यलेपता भगवतश्चिद्घनत्वेन तदसंस्पर्शादिति विरोधाभासः ॥१५॥

मङ्गलाय पवित्राय निधये भूषणात्मने।
प्रियाय परमार्थाय सर्वोत्कृष्टाय ते नमः ॥१६॥

मङ्गलायेति। मङ्गलेत्यादि स्पष्टं। सर्वोत्कृष्टायेति सर्वत्र योज्यं। येन येन मुखेन विचार्यते तेन तेनोत्तमत्वं सर्वोत्कृष्टत्वात् ॥ १६ ॥

नमः सततबन्धाय नित्यनिर्मुक्तिभागिने।
[illegible]धमोक्षविहीनाय कस्मैचिदपि चेष्टिते ॥१७॥
[illegible]प्यालिङ्गन्त्यपि यं तस्मै कस्मैचिद्भवते नमः २०

त्वम् वस्तुतस्तु चिद्घनत्वात्तद्धीनत्वम् । विरोधाभासः पूर्ववत् । एवमुत्तरत्रापि ॥ १७ ॥

उपहासैकसारेऽस्मिन्नेतावति जगत्त्रये ।
तुभ्यमेवाद्वितीयाय नमो नित्यसुखासिने ॥१८॥

उपहासैक इति । तुच्छरूपत्वादुपहसनीयपरमार्थे एतावति अतिवितते जगत्त्रये भवाभवातिभवात्मनि । अद्वितीयाय असाधारणैकरूपाय नित्यसुखासिने आनन्दघनायोपादेयतमाय तुभ्यमेव नमः ॥१८॥

दक्षिणाचारसाराय वामाचाराभिलाषिणे ।
सर्वाचाराय शर्वाय निराचाराय ते नमः ॥१९॥

दक्षिणाचार इति । दक्षिणाचारो भैरवतन्त्रां अविपरीतानुष्ठानं च सारः सारत्वेनाभिमतो यस्य । वामाचारं वादितन्त्रां विपरीतक्रमं चाभिलषति यस्तस्मै । सर्व आचारो निजः परिस्पन्दो यस्य । निष्क्रान्ता आचारा यस्मात् आचारेभ्यश्च ध्यानपूजा-[illegible]भ्यो निष्क्रान्तो यस्तस्मै । अथ च श्रीमदाचारनिराचाररूपं [illegible]तक्रमादि शास्त्रार्थतत्त्वं तद्रूपाय नमः ॥ १९ ॥

यथा तथाऽपि यः पूज्यो
यत्र तत्राऽपि योऽर्चितः ।
योऽपि वा सोऽपि वा योऽसौ
देवस्तस्मै नमोऽस्तु ते ॥ २० ॥

यथा[illegible] येन येन प्रकारे[illegible] कश्चिद्यत्किञ्चि[illegible]
[illegible]स्मै नमस्तुभ्यम[illegible] [illegible]त्वविष्णूपल-



तत्त्वविदामिति तात्पर्यम् । यत्तच्छब्दाः नियमव्युदासाय । यथागमः "यथालाभं प्रपूजयेदि"ति ॥२०॥

मुमुक्षुजनसेव्याय सर्वसन्तापहारिणे ।
नमो विततलावण्यवाराय वरदाय ते ॥२१॥

मुमुक्षु इति । साधकानां मन्त्राणां प्राणत्वान्मुमुक्षुभिरेव समनन्तरोक्तयुक्त्या निर्यन्त्रणं सेवितुं शक्याय । सर्वेषां भेदमयानां सन्तापानां हारिणे अपहन्त्रे । विततेत्युक्तिः परमानन्दघनत्वेनातिस्पृहणीयत्वात् । वारः समूहः "समूहनिवहव्यूहवारसङ्घातसञ्चया" इत्यमरः । वरदाय संविन्नैर्मल्यसारप्रसादप्रदाय ॥ २१ ॥

सदा निरन्तरानन्दरसनिर्भरिताखिल- ।
त्रिलोकाय नमस्तुभ्यं स्वामिने नित्यपर्वणे ॥२२

सदा निरन्तरानन्द इति । प्राग्वत्त्रिलोकस्य विश्वस्य स्वस्यानन्दरसेन पूरणात्स्वामिने इत्युचितोक्तिः । नित्यपर्व्वणे सदा विश्वपूरकरूपाय । पर्व पूरणे इत्यस्य प्रयोगः । सर्वेश्च पर्वणि आनन्दरसनिर्भरितं निखिलं करोति ॥ २२ ॥

सुखप्रधानसंवेद्यसम्भोगैर्भजते च यत् ।
त्वामेव तस्मै घोराय शक्तिवृन्दाय ते नमः ॥२३।

ग्रासास्वादैः, त्वामेव भजते त्वय्येव विश्वमर्पयति । तस्मै घोराय सर्वसंहर्त्रे ते तव सम्बन्धिने नमः ॥ २३ ॥

मुनीनामप्यविज्ञेयं भक्तिसम्बन्धचेष्टिताः ।
[illegible]प्यालिङ्गन्त्यपि यं तस्मै कस्मै चिद्भवते नमः २४

मुनीनामिति। तपोयोगादिनिष्ठानां कपिलादीनामपि ज्ञातुमशक्यं। भक्तिसम्बन्धचेष्टिताः समावेशरसानुविद्धव्यापाराः। आलिङ्गन्त्यपि दृढावष्टम्भयुक्त्या स्वसम्भोगपात्रं कुर्वन्त्यपि यं तस्मै कस्मै चित्स्वात्मनि स्फुरते नमः ॥ २४ ॥

परमामृतकोशाय परमामृतराशये ।
सर्वपारम्यपारम्यप्राप्याय भवते नमः ॥ २५ ॥

परमामृत इति। परमानन्दरसस्य कोशो गञ्जमिव, अतस्तत्पूर्णत्वाद्राशिश्च, बहिरपि तन्मयत्वात्। सर्वस्य मायादेः पारम्यं परमत्वं प्रकाशमानता । तस्यापि पारम्यं आनन्दघनश्चमत्कारः शाक्तः समुल्लासः, तेन प्राप्याय ॥ २५ ॥

महामन्त्रमयं नौमि रूपं ते स्वच्छशीतलम् ।
अपूर्वामोदसुभगं परामृतरसोल्बणम् ॥ २६ ॥

महामन्त्रमयेति । महामन्त्रमयं अकृत्रिमाहम्परामर्शमयं तव रूपं नौमि इति प्राग्वत् । स्वच्छं विश्वप्रतिबिम्बधारणात्। शीतलं संसारतापहारित्वात् । अपूर्वेण आमोदेन अलौकिकेन व्यापिपरिमलेन ह्लादिना स्वरूपेण। सुभगं स्पृहणीयं। परमामृतरसेन परमानन्देनोल्बणं बृंहितम् ॥ २६ ॥

स्वातन्त्र्यामृतपूर्णत्वदैक्यख्यातिमहापटे ।
चित्रं नास्त्येव यत्रेश तन्नौमि तव शासनम् ॥ २७ ॥

स्वातन्त्र्या इति। स्वातन्त्र्यामृतेन सम्पूर्णा स्वतन्त्रता आनन्दघना या त्वदैक्यख्यातिः भवदभेदप्रथा सैव विश्वचित्रतन्तुव्याप्त्या महापटः, तत्र विषये यत् शासनं, शास्यतेऽनेनेति कृत्वा त्वदुपदेशको य आगमः तं नौमि। यत्र विश्वमाश्चर्यमयं त्वदैक्यप्रथनसारेऽपि चित्रं नानारूपं नास्त्येव, त्वदैक्यख्यातिप्रतिपादकत्वात्, चित्रमद्भुतं च नास्ति, अनुत्तरत्वादागमस्य सर्वसंभावनाभूमित्वात्, अथ च पटे स्थितं शासनमविचित्ररूपं चेति चित्रम् ॥ २७ ॥



सर्वाऽऽशङ्काशनिं सर्वाऽलक्ष्मीकालानलं तथा ।
सर्वाऽमङ्गल्यकल्पान्तं मार्गं माहेश्वरं नुमः ॥ २८ ॥

सर्वाशंकाइति । सर्वासामाशङ्कानां द्रव्यपूजामन्त्रादिसङ्कीर्णत्वाद्युक्तानां विचित्रसंसारबीजभूतानां चित्तवृत्तिम्लानिदानां अशनिं स्वरूपध्वंसकं । आम्नायेऽपि च "शङ्कापि न विशङ्केत निश्शंकत्वमिदं स्फुट"मित्युक्तं । अलक्ष्मीणां अनानन्ददशानां कालानलं महादाहकं, सर्वामङ्गल्यानामशुभसूचकानां कल्पान्तं निःशेषेण नाशकं, माहेश्वरं मार्गं शाक्तं प्रसरं नुमः ॥ २८ ॥

जय देव नमो नमोऽस्तु ते
सकलं विश्वमिदं तवाश्रितम् ।
जगतां परमेश्वरो भवान्
परमेकः शरणागतोऽस्मि ते ॥ २९ ॥

जयदेवेति । परमेकोस्मीति देहाद्यभिमानेन त्वन्मायाशक्तिकॢप्तेन विश्वविभेदेन त्वत्तः पृथगिव कृतः, अत एव शरणमागतः। युक्तं चैतत् यतो विश्वमिदं तवाश्रितं चिन्मयत्वत्स्वरूपमग्नं, ततश्च जगतां भवानेव परमेश्वरः ब्रह्मादिभ्यः सदाशिवान्तेभ्यः उत्तमः, अत एव हे देव क्रीडादिशील, जय देहाद्यभिमानमिममुदस्य स्वरूपेण प्रथस्व इति प्राग्वत् ॥ २९ ॥

इति श्रीमदुत्पलदेवाचार्यविरचितस्तोत्रावल्यां सर्वात्मपरिभावनानामकं द्वितीयस्तोत्रम् ॥ २ ॥

—∞—

ॐ सदसत्त्वेन भावानां युक्ता या द्वितयी गतिः ।
तामुल्लङ्घ्य तृतीयस्मै नमश्चित्राय शम्भवे ॥१॥

ॐ सदसत्त्वेनेति। भावानां प्रमेयादीनां जन्मसत्तादिरूपतया प्राक्प्रध्वंसाभावादिरूपतया च द्वितयीरूपा द्वितयीयुक्ता यतस्ते भावा भावनीयाः सम्पादनीयाः, तामुल्लङ्घ्य उज्झित्वा यस्तृतीयः सदसत्ताभ्यामव्यपदेश्यत्वात्तुर्यादिवत्संख्ययैव व्यपदेश्यः स्थितः, तस्मै चित्राय आश्चर्याय विश्वचित्राय नमः इति प्राग्वत् ॥ १ ॥

आसुरर्षिजनादस्मिन्नस्वतन्त्रे जगत्त्रये ।
स्वतन्त्रास्ते स्वतन्त्रस्य ये तवैवाऽनुजीविनः ॥२॥

आसुरर्षि इति । जगत्त्रयं प्राग्वत् । सुरर्षिजनात् मरीच्यादिदेवर्षिजनात्। आ आङ् अभिविधौ। अस्वतन्त्रत्वं सृष्टिसंहारगोचरत्वं। स्रष्ट्रादिरूपस्तु शम्भुरेव स्वतन्त्रः । तस्य च ये ऽनुजीविनः तदात्मकस्वात्मसाक्षात्कारिणः ते ऽपि तत्समावेशात् स्वतन्त्रा एव ॥ २ ॥

अशेषविश्वखचितभवद्वपुरनुस्मृतिः ।
येषां भवरुजामेकं भेषजं ते सुखासिनः ॥ ३ ॥

अशेषेति। भवरुजां सांसारिकोपतापानां। भेषजमौषधं। विश्वखचितत्वात्सर्वोपकृतिकरणक्षमा भवद्वपुरनुस्मृतिः चिदात्मनस्त्वत्स्वरूपस्यानुगततया स्मरणं समावेशमयं येषामस्ति, ते सुखासिनः। सत्स्वपि देहादिनान्तरीयकेषु दुःखस्पर्शेषु परमानन्दघने सुख एव तिष्ठन्ति ॥ ३ ॥

सितातपत्रं यस्येन्दुः स्वप्रभापरिपूरितः ।
चामरं स्वर्धुनीस्रोतः स एकः परमेश्वरः ॥ ४ ॥



सितातपत्रमिति । इन्दुः सर्वमेयरूपः, प्रकाशदशायां स्वप्रभाभिश्चैतन्यमरीचिभिः परिपूर्णतां प्रापितः, यस्य सितं शुद्धं, स्वात्मलग्नत्वाच्च बद्धं, पाशवहेयोपादेयतादिकल्पनोत्थात् आतपात् त्रायते इत्यातपत्रं । तथा स्वः स्वर्गं तदुपलक्षितं च निरयं धर्माधर्मफलं धुनोति स्वर्धुनी मध्यवाहिनी चिच्छक्तिः, सैव प्रसरद्रूपत्वात्स्रोतः, तद्यस्य चामरं माहात्म्यप्रथाहेतुः। स एको न तु अन्यः परम ईश्वरः। स्थूलदृष्ट्या तु निजरश्मिपूर्णः खण्डेन्दुः गङ्गा च यस्यासाधारणं छत्रं चामरं चेति स्पष्टम् ॥ ४ ॥

प्रकाशां शीतलामेकां शुद्धां शशिकलामिव ।
दृशं वितर मे नाथ कामप्यमृतवाहिनीम् ॥५॥

प्रकाशां शीतलामिति। प्रकाशां स्वप्रकटां, शीतलां सन्तापहरां, शुद्धां भेदशङ्काशातिनीं च, एकामद्वितीयां, कामप्यपूर्वां, अमृतवाहिनीं च अमृतस्यन्दिनीं, दृशं संविदं, मे मह्यं, नाथ, वितर प्रयच्छ । शशिकलापक्षे श्लिष्टोक्तेः स्पष्टोऽर्थः ॥ ५ ॥

त्वच्चिदानन्दजलधेश्च्युताः संवित्तिविप्रुषः ।
इमाः कथं मे भगवन्नामृतास्वादसुन्दराः ॥६॥

त्वच्चिदानन्द इति । त्वत्तः चिदानन्दसमुद्रात्, याः संवित्तिविप्रुषः नीलसुखादिज्ञानकणिकाः, प्रकाशमानत्वाच्चिदानन्दसारा एव, च्युता निर्याताः, समकालममृतास्वादसुन्दराः, इमा विस्फुरन्त्यो, नो कथं भवन्ति, भवन्त्येवेत्यर्थः ॥ ६ ॥

त्वयि रागरसे नाथ न मग्नं हृदयं प्रभो ।
येषामहृदया एव तेऽवज्ञास्पदमीदृशाः ॥ ७ ॥

त्वयि रागेति । त्वद्विषये रागरसो भक्तिप्रसरः । तत्र येषां हृदयं न मग्नं समाविष्टं, ते अविद्यमानतात्त्विकहृदयाः

ईदृशा इति संसारक्लेशभाजनभूताः अवज्ञास्पदं भक्तिमताम् अगणनीया एव ॥ ७ ॥

**प्रभुणा भवता यस्य जातं हृदयमेलनम् ।**
**प्राभवीणां विभूतीनां परमेकः स भाजनम् ॥८॥**

प्रभुणेति। उक्तार्थप्रातिपक्ष्येणोक्तिः। यस्येति कस्यचिदेव। अहृदयास्तु प्रायो बहव इति बहुवचनमत्र नोक्तं । हृदयमेलनं समावेशेनैकत्वम्। विभूतयः अद्वयानन्दसम्पदः। यस्य च लौकिकेश्वरेण हृदयमेलनं भवति स एवैकस्तु विभूतीनां पात्रं नान्य इति श्लेषेण ध्वनति ॥ ८ ॥

**हर्षाणामथ शोकानां सर्वेषां प्लावकः समम् ।**
**भवद्ध्यानामृतापूरो निम्नानिम्नभुवामिव ॥ ९ ॥**

हर्षाणामिति। भवद्ध्यानं समावेशरूपं त्वच्चिन्तनमेव अमृतापूरः। स यथा निम्नानिम्नभुवामशुद्धेतररूपमायाविद्याभूमीनां समं युगपत्प्लावकः सामरस्यापादकः, तथा लौकिकशोकहर्षादीनामपि। समाविष्टस्य हि युगपदेव निखिलं परमानन्दव्याप्तिमयं जायते। जलापूरश्च निम्नोन्नताश्च भूमीः प्लावयति ॥ ९ ॥

**केव न स्याद्दशा तेषां सुखसम्भारनिर्भरा ।**
**येषामात्माधिकेनेश न क्वापि विरहस्त्वया ॥१०॥**

केव न स्याद्दशेति। येषामात्माधिकेनेश, देहादि निमज्ज्य चिद्घनत्वेन स्फुरता त्वया कदाचिदपि न वियोगः तेषां सुखसम्भारनिर्भरा परमानन्दपूर्णा का इव दशा न स्यात् सर्वैव भवतीत्यर्थः। जीवन्तः ईश्वरावियुक्ताश्च सदा सुखिनो भवन्ति ॥ १० ॥



**गर्जामि बत नृत्यामि पूर्णा मम मनोरथाः ।**
**स्वामी ममैष घटितो यत्त्वमत्यन्तरोचनः ॥११॥**

गर्जामि बतेति। अतिभक्तिरसानन्दघूर्णितस्येयमुक्तिः। अत्यन्तं रोचनः अतिशयेन प्रियः। एष इति वक्तुमशक्यः स्वानुभवसंसिद्धः। तथा च अत्यन्तरोचनः विश्वग्रासकत्वेन अतिदीप्तप्रकाशवपुर्यतस्त्वं स्वामी मम घटितः समावेशेन मयाऽऽसादितः। ततो गर्जामि महारवमुच्चारयामि, नृत्यामि हर्षप्रसरभरेण सर्वतोमायाप्रमादभावधूननसारं गात्रविक्षेपं करोमि। मम च मनोरथाः पूर्णाः निराकाङ्क्षोऽस्मि जात इत्यर्थः। बत इति अनुत्तरचित्स्वरूपप्रत्यभिज्ञानाद्विस्मयमुद्राऽनुप्रवेशं ध्वनति ॥ ११ ॥

**नान्यद्वेद्यं क्रिया यत्र नान्यो योगो विदा च यत् ।**
**ज्ञानं स्यात् किन्तु विश्वैकपूर्णा चित्त्वं विजृम्भते॥१२॥**

नान्यद्वेद्यमिति। तथाविधो मम स्वामी घटितो यत्र स्वामिनि सति अन्यद्भिन्नं वेद्यं, अन्या क्रिया, अन्यो योगः, अन्या च विदा संविन्नास्ति, घटितस्वामिव्यतिरिक्तं मम न किंचिदपि भातीत्यर्थः। क्रिया विदा इत्यत्र अन्या इति योजना। तत्र पूर्णं त्वस्त्येवेति आह । किन्तु यज्ज्ञानं स्यात्तद्विश्वस्यैका पूर्णाहुतिः बोधाग्निप्रज्वालिनी, पूर्णाहंपरामर्शक्रियाशक्तिस्वरूपमेतज्ज्ञानमिति यावत्। यच्चैतत्कृज्ज्ञानं तदेवं चित्त्वं शिवप्रकाशरूपत्वं विजृम्भते नान्यत्। यथागमः "न योगोऽन्यः क्रिया नान्या तत्त्वारूढा हि या मतिः। स्वचित्तवासनाशान्तौ सा क्रियेत्यभिधीयते" ॥१२॥

**दुर्जयानामनन्तानां दुःखानां सहसैव ते ।**
**हस्तात्पलायिता येषां वाचि शश्वच्छिवध्वनिः॥१३॥**

दुर्जयानामिति। हस्तात्पलायिता इत्यनेन शिवध्वनिशून्यवाचः सर्वदुःखाक्रान्ता इति ध्वनति। तथा चोच्यते आब्रह्मणश्च कीटाच्चेत्यादि। "आब्रह्मणश्च कीटाच्च न कश्चित् तत्त्वतः सुखी। करोति तास्ता विकृतीः सर्व एव जिजीविषुः" ॥ १३ ॥

उत्तमः पुरुषोऽन्योऽस्ति युष्मच्छेषविशेषितः।
त्वं महापुरुषस्त्वेको निःशेषपुरुषाश्रयः ॥१४॥

उत्तमः पुरुष इति। हरिः पुरुषोत्तम इति प्रसिद्धः, स युष्मच्छेषेण तावकेन अभेदसारविद्याऽधिष्ठातृषु प्रमातृषु च लब्धादन्येन अधिष्ठानात्मना स्वरूपेण विशेषितः सम्पादितविशेषः। तथा चागमः—"वैष्णव्यास्तु स्मृतो विष्णु"रिति। त्वं सकलादिसदाशिवान्तनिःशेषपुरुषाश्रयत्वान्महापुरुषः। अन्यशब्दः कश्चिदर्थः। एकः अद्वितीयः। इति एकः श्लोकार्थः। अपरस्तु व्याकरणप्रक्रियया उत्तमपुरुषः अस्मदर्थे यः स युष्मच्छेषाभ्यां मध्यमप्रथमपुरुषाभ्यां विशेषितः सञ्जातविशेषोऽस्ति, तस्य च तटस्थपरामृश्यात्प्रथमपुरुषाद्युष्मदर्थोन्मुखाच्च मध्यमपुरुषादयं विशेषः यदशेषपुरुषाश्रयत्वं तद्विश्रान्तिधामत्वं। सर्वस्येदन्ताविमृश्यस्याहन्तायामेव विश्रान्तेः। स पचति त्वं पचसि अहं पचामीति विवक्षायां वयमेव पचाम इत्यादौ प्रयोगेऽयमेवाशय इत्यास्तां। त्वं तु विनिःशेषाणां प्रथममध्यमोत्तमपुरुषाणां कल्पितानामकल्पितचिद्रूपाश्रयः। यथोक्तं प्रत्यभिज्ञायां "ग्राह्यग्राहकताभिन्नावर्थौ भातः प्रमातरि" इति अत एव महापुरुषो महेश्वरो, महादेववन्महच्छब्दस्य त्वय्येव प्रवृत्तत्वात् ॥ १४ ॥

जयन्ति ते जगद्वन्द्या दासास्ते जगतां विभो।
संसारार्णव एवैष येषां क्रीडामहासरः ॥१५॥



जयन्तीति। जगद्वन्द्यत्वं शिवसमावेशमात्रत्वात्। जगतां विभो, तव दासास्ते जयन्ति, येषां संसारसमुद्र एवैष इत्यतिघोरोऽपि चिद्रूपतया ज्ञातपरमार्थः सन् क्रीडामहासरःकल्पः। यथोक्तं "इति वा यस्य संवित्तिः क्रीडात्वेनाखिलं जगत्, सम्पश्यान्नि"त्यादि ॥१५॥

आसतां तावदन्यानि दैन्यानीह भवज्जुषाम्।
त्वमेव प्रकटीभूया इत्यनेनैव लज्ज्यते ॥१६॥

आसतां तावदिति। अन्यानि दैन्यानि अणिमादिप्रार्थना। भवज्जुषां सततसमावेशप्रथमानत्वत्स्वरूपाणामतएवार्थनीयान्तरविरहात्प्रकटीभूया इत्यनेनैव कदाचित्समाविष्टैः प्रार्थनीयेन यतो लज्ज्यते ततो दण्डापूपीन्यायेन दैन्यान्तरसम्भावनैव नास्ति ॥ १६ ॥

मत्परं नास्ति तत्रापि जापकोऽस्मि तदैक्यतः।
तत्त्वेन जप इत्यक्षमालया दिशसि क्वचित् ॥१७॥

मत्परं नास्ति तत्रेति। महेशितुरपि जप्यं देवतान्तरमस्ति अक्षमालायोगादिति ये मुह्यन्ति तान् बोधयितुमाह। मत्परं तावन्नास्ति तथाऽपि जापकोऽस्मि यत्, तत् तस्मात् ऐक्यत ऐक्येन चिदभेदेन, परमार्थतो जपः पूर्णाहन्ताविमर्शात्मा नित्योदितो भवतीति अक्षमालया क्वचिद्गौरीश्वराद्याकृतौ दिशसि कथयसि। तच्छब्दाद्यच्छब्द आक्षेप्यः। अथ वा अक्षमालया करणेश्वरीपंक्त्या समस्तार्थसार्थे सर्गसंहारपरम्परासम्पत्तये पुनः पुनरावर्तमानया ऐक्यतो महार्थनया भेदसारेणैकत्वेन च जपोऽनुत्तरविमर्शसारो भवतीत्यक्षमालयैव वर्णलिपिन्यायेन युक्त्या शिक्षयसि ॥ १७ ॥

सतोऽवश्यं परमसत्सच्च तस्मात्परं प्रभो ।
त्वं चासतस्सतश्चान्यस्तेनाऽसि सदसन्मयः ॥१८॥

सतोवश्यमिति । भावाभावौ परस्परभिन्नौ । त्वमसतः खपुष्पादेः, सतश्च नीलसुखादेरन्यो विलक्षणः चिदानन्दघनः, अत एव सदसन्मयः सद्रूपोप्यसद्रूपोऽपि सदसद्रूपोऽपि विश्वात्मकस्त्वं, "ननु सद्रूप एव वा असद्रूप एव वा उभयोज्झित एव वा। तथा श्रीभर्गशिखायां–"न सन्न चासत्सदसन्नैव तदुभयोज्झितामि"त्युपक्रम्य, दुर्ज्ञेया हि साऽवस्था किमप्येतदनुत्तरमि"त्यनिर्वचनीयतयैव विश्वोत्तीर्णविश्वमयचिदानन्दघनमनुत्तरस्वरूपं सदसत्त्वेनेति श्लोकेन भावनीयसदसत्ताकोटिद्वयवैलक्षण्यमुक्तम्, अनेन तु सर्वभावाभावोत्तरत्वम् ॥ १८ ॥

सहस्रसूर्यकिरणाधिकशुद्धप्रकाशवान् ।
अपि त्वं सर्वभुवनव्यापकोऽपि न दृश्यसे ॥१९॥

सहस्रसूर्यकिरणेभ्योप्यधिकः, तेषामपि तत्प्रकाशत्वात् । शुद्धश्चिदेकरूपः प्रकाशो भूम्ना प्राशस्त्येन च यस्य । अत एव सर्वभुवनव्यापकस्त्वं । मायाव्यामूढै र्न दृश्यसे भासमानोऽपि न प्रत्यभिज्ञायसे इति यावत् ॥ १९ ॥

जडे जगति चिद्रूपः किल वेद्येऽपि वेदकः ।
विभुर्मिते च येनासि तेन सर्वोत्तमो भवान् ॥२०॥

जडे जगतीति । जगति क्षित्यादिसदाशिवावसाने जडे वेद्ये मिते च असि त्वं चिद्रूपो वेदको व्यापकश्च यतस्ततः सर्वोत्तमोसीति सम्बन्धः ॥ २० ॥



अलमाक्रन्दितैरन्यैरियदेव पुरः प्रभोः ।
तीव्रं विरौमि यन्नाथ मुह्याम्येवं विदन्नपि ॥२१॥

अलमिति । व्युत्थानदशापरवशः समावेशतत्त्वं जानन्नपि मुह्यामीति व्युत्थाने समावेशवशो भवामीति शिवम् ॥ २१ ॥

इति श्रीमदुत्पलदेवाचार्यविरचितस्तोत्रावलौ प्रणयप्रसादनामके तृतीयस्तोत्रे श्रीक्षेमराजविरचिता विवृतिः ॥

---

ॐ चपलमसि यदपि मानस
तत्रापि श्लाध्यसे यतो भजसे ।
शरणानामपि शरणं
भुवनगुरुमम्बिकाकान्तम् ॥ १ ॥

ॐ चपलमसीति । चापलाद्यद्यपि भगवद्भजने न प्ररोहसि तथाऽपि कृतार्थमसि । क्षणमात्रमपि तत्सेवायाः पूर्णव्याप्तिप्रदत्वात् । अत एव शरणानामपीत्यसामान्यतां भगवतः प्रथयति । शरणानां ब्रह्मविष्ण्वादीनामपि शरणं समाश्रयं त्रिभुवनगुरुं विश्वस्योपदेष्टारं पूज्यं च । अम्बिका परा शक्तिः ॥ १ ॥

उल्लङ्घ्य विविधदैवतसोपानक्रममुपेयशिवचरणान् ।
आश्रित्याप्यधरतरां भूमिं नाद्याऽपि चित्रमुज्झामि।२

उल्लङ्घ्येति । विविधानि ब्रह्मविष्णुरुद्रेश्वरसदाशिवादिरूपाणि दैवतान्येव सोपानक्रमः, तमुल्लङ्घ्य विश्रान्तिपदीकृत्य, उपे-

यस्योपगन्तव्यस्य आत्मसमीपे प्राप्तव्यस्य शिवस्य, चरणान् मरीचीन्, आसमन्तात् श्रित्वा समावेशयुक्त्या स्वीकृत्यापि, चित्रं यदद्यापि अधरतरां भूमिं व्युत्थानपतितां मायीयदेहादिप्रमातृतां न त्यजामि । दैवतानां सोपानक्रमेणानुपादेयतां भगवतस्तु चरणसमाश्रयेणोपादेयतमतां प्रकाशयन्नात्मनस्तत्समाश्रयेण श्लाघ्यतां ध्वनति ॥ २ ॥

प्रकटय निजमध्वानं
स्थगयतरामखिललोकचरितानि ।
यावद्भवामि भगवं-
स्तव सपदि सदोदितो दासः ॥ ३ ॥

प्रकटयेति । निजमध्वानं स्वं शाक्तं मार्गम् । अखिलस्य लोक्यलोकयितृरूपस्य मेयमातृवर्गस्य सदाशिवान्तस्य । चरितानि स्थगयतरां निःशेषेण शमय । यावत् तव सदोदितो दासो भवामि त्वच्चरणसपर्यापरो नित्यसमाविष्टः स्फुरामि इति यावत् ॥३॥

शिव शिव शम्भो शङ्कर
शरणागतवत्सलाशु कुरु करुणां ।
तव चरणकमलयुगल-
स्मरणपरस्य हि सम्पदोऽदूरे ॥ ४ ॥

शिवशिवेति । तव चरणयुगलं ज्ञानक्रियामयं मरीचिद्वयं । सम्पदः समावेशसाराः परमानन्दमय्यः । अदूरे निकटे ॥ ४ ॥

तावकाङ्घ्रिकमलासनलीना
ये यथारुचि जगद्रचयन्ति ।



ते विरिञ्चिमधिकारमलेना-
ऽऽलिप्तमस्ववशमीश हसन्ति ॥ ५ ॥

तावकाङ्घ्रीति । सङ्कोचविकासपरत्वन्मरीचिविश्रान्ताः तत एव आस्वादितस्वातन्त्र्या, यथारुचि करणेश्वरीप्रसरयुक्त्या, ये जगद्रचयन्ति ते विरिञ्चि ब्रह्माणमधिकारमलेन आसमन्ताल्लिप्तमत एव नियतिपरतन्त्रत्वादस्ववशमस्वतन्त्रं । हे ईश स्वतन्त्र । हसन्ति कमलासनोऽपि तेषां हासास्पदमित्यर्थः ॥ ५ ॥

त्वत्प्रकाशवपुषो न विभिन्नं
किं च न प्रभवति प्रतिभातुम् ।
तत्सदैव भगवन्परिलब्धो
ऽसीश्वर प्रकृतितोऽपि विदूरः ॥ ६ ॥

त्वत्प्रकाशवपुषइति । हे ईश्वर असि त्वं प्रकृतितः विदूरोऽपि स्वगोपनादप्राप्योऽपि सदैव परिलब्धः अस्माभिरिति शेषः । यतः यत् किञ्चित्प्रतिभातुं प्रभवति भासते तत्त्वत्तः प्रकाशवपुषश्चिद्रूपात् न भिन्नं प्रकाशमयस्यैव प्रकाशार्हत्वात् । यथोक्तं- "यस्मात्सर्वमयो जीव" इत्यादि "भोक्तैव भोग्यभावेन सदा सर्वत्र संस्थित" इत्यन्तम् ॥ ६ ॥

पादपङ्कजरसं तव के चिद्
भेदपर्युषितवृत्तिमुपेताः ।
के चनाऽपि रसयन्ति तु सद्यो
भातमक्षतवपुर्द्वयशून्यम् ॥ ७ ॥

पादपङ्कजेति । तव ज्ञानक्रियामरीचिद्वयमयचरणकमलरसं

केचित् द्वैतनिष्ठाः, भेदेन पर्युषिता, झगिति उपभोगानासादनेन शुक्तीकृतप्राया वृत्तिः स्वरूपं यस्य तमुपेताः प्राप्ताः, न तु सद्य आस्वादयन्ति । केचित्पुनः परशक्तिपातपवित्रिताः सद्यो भातं झगिति उपनतं अक्षतवपुषं नित्यस्फुरत्स्वरूपं द्वयशून्यं चिदान्दैकघनं रसयन्ति चमत्कुर्वन्ति । केचिदित्यपकर्षः केचनापीत्युत्कर्षं ध्वनति ॥ ७ ॥

नाथ विद्युदिव भाति विभा ते
या कदा चन ममामृतदिग्धा ।
सा यदि स्थिरतरैव भवेत्तत्
पूजितोऽसि विधिवत्किमुतान्यत् ॥ ८ ॥

नाथ विद्युदिवेति । हे नाथ तव विभा परः शाक्तः स्पन्दः । अमृतदिग्धा परमानन्दोपचिता । विद्युदिव क्षणमात्रं कदाचिन्ममावभाति समावेशे स्फुरति । सा यदि बलवद्व्युत्थानमपहस्त्य नित्योदिता स्यात्तद्विधिवद्यथातत्त्वं पूजितोऽसि । किमुतान्यत् परिसमाप्तं करणीयं कृतकृत्यता च जायते इत्यर्थः ॥ ८ ॥

सर्वमस्यऽपरमस्ति न किंचिद्
वस्त्ववस्तु यदि वेति महत्या ।
प्रज्ञया व्यवसितोऽत्र यथैव
त्वं तथैव भव सुप्रकटो मे ॥ ९ ॥

सर्वमसीति । असि त्वं सर्वमपरं वस्तु यदि वाऽवस्तु न किंचिदस्ति, सर्वस्य चिद्घनत्वात्प्रकाशमयत्वेन प्रकाशनात् इत्येवं शुद्धविद्यामय्या यथैव महत्या प्रज्ञयाऽत्रजगति त्वं



निश्चितस्तथैव मे सुष्ठु व्युत्थानेऽपि समावेशवशात् प्रकटो भव ॥ ९ ॥

स्वेच्छयैव भगवन्निजमार्गे
कारितः पदमहं प्रभुणैव ।
तत्कथं जनवदेव चरामि
त्वत्पदोचितमवैमि न किं चित् ॥ १० ॥

स्वेच्छयैवेति । हे भगवन् अहं प्रभुणैव न तु अन्येन केनचित् । स्वेच्छयैव निरपेक्षशक्तिपातयुक्त्या । निजमार्गे विकस्वरशक्तिवर्त्मनि । पदं कारितः विश्रान्तिं लम्भितः । तत्कथं जनवदेव लोकवदेव । चरामि व्युत्थाने व्यहरामि । त्वत्पदोचितं त्वन्मरीचिपरिचयसमुचितं समावेशवशान्न किं चिदवगच्छामि ॥ १० ॥

कोऽपि देव हृदि तेषु तावको
जृम्भते सुभगभाव उत्तमः ।
त्वत्कथाम्बुदनिनादचातका
येन तेऽपि सुभगीकृताश्चिरम् ॥ ११ ॥

कोपीति । हे देव तेषु केषु चित् प्रागुक्तभक्तिमत्सु हृदि तावकः उत्तमः उत्कृष्टः सुभगभावः कोऽपि उच्छलदानन्दरसोल्बणत्वं किमप्युज्जृम्भते, येन तेऽपीति समावेशसम्भिन्नहृदया अपि, अत एव त्वत्कथैव अम्बुदनिनादः तत्र चातका इव समावेशशालिप्रतन्यमानशिवकथाऽऽकर्णनप्रहृष्टहृदया अपि चिरं सुभगीकृताः समावेशभूमिं लम्भिताः । यत्कथामात्रेण समावेशोऽवतरतीत्यर्थः ॥ ११ ॥

त्वज्जुषां त्वयि कयाऽपि लीलया
राग एष परिपोषमागतः ।
यद्वियोगभुवि सङ्कथा तथा
संस्मृतिः फलति संगमोत्सवम् ॥ १२ ॥

त्वज्जुषामिति। कयापीति अनुत्तरसमावेशशालिन्या लीलया त्वज्जुषां त्वां प्रीत्या सेवमानानाम्। एष इति असामान्यो रागः परिपोषं प्राप्तः।त्वद्वियोगभुवि व्युत्थाने। सङ्कथा संस्मृतिश्च कर्त्री सम्भोगोत्सवं सम्भोगदशां फलति। वियोगभुवि सङ्गमोत्सवमित्युक्त्या अलौकिकत्वमनुरागस्य ध्वनति ॥ १२ ॥

यो विचित्ररससेकवर्धितः
शङ्करेति शतशोऽप्युदीरितः ।
शब्द आविशति तिर्यगाशये-
ष्वप्ययं नवनवप्रयोजनः ॥ १३ ॥
ते जयन्ति सुखमण्डले भ्रमन्
अस्ति येषु नियतं शिवध्वनिः ।
यः शशीव प्रसृतो ऽमृताशयात्
स्वादु संस्रवति चामृतं परम् ॥ १४ ॥

यो विचित्रेति ते जयन्तीति युगलकम्। ते जयन्ति येषु सुखमण्डले नियतं निश्चितं कृत्वा भ्रमन् शिवध्वनिरस्ति । यः स्वादु परं चामृतं सम्यक् स्रवति आनन्दरसं समुच्छलयति। कीदृक् अमृताशयात् साक्षात्कृतचिद्घनपरमेश्वररूपात्प्रसृतः स्वरसेनोच्चारितः। यथा अमृताशयात्, शशी चन्द्रमाः प्रसृतः मण्डले स्फुरन्, परं स्वाद्वमृतं स्रवति, यश्चैव विचित्रेण समावेशरससेकेन वर्धितोऽत एव शतशोऽप्युदीरितः शङ्करेत्ययं शब्दः, तिर्यगाशयेषु पशुहृदयेष्वपि, नवनवप्रयोजनः प्रतिक्षणं तत्तदपूर्वचमत्कारकारी, आविशति परिस्फुरति ॥ १३ ॥ १४ ॥

परिसमाप्तमिवोग्रमिदं जगद्
विगलितोऽविरलो मनसो मलः ।
तदपि नास्ति भवत्पुरगोपुरा-
र्गलकवाटविघट्टनमण्वपि ॥ १५ ॥

परिसमाप्तमिवेति । स्फुरत्प्रसग्रसमावेशसंस्कारस्य व्युत्थानभूमिमवतितीर्षोरियमुक्तिः। उग्रं भेदमयत्वाद्भीषणं। जगद्विश्वं, परिसमाप्तमिव। समाविष्टस्य हि न बाह्यं विश्वं विभाति अथ च संस्कारशेषतयाऽऽस्ते इति इव शब्दः। मनसश्च अविरलो घनः मलः अविद्याकलात्मा विगलितः। तथाऽपि निःशेषशान्ताशेषविश्वमयप्रफुल्लमहाविद्योद्यज्जगदानन्दमयस्य पूरकत्वात्पुररूपस्य, यद्गोपुरं पुरद्वारं परमशक्तिरूपं, तत्रार्गलयुक्तकवाटविघट्टनमतिदृढाख्यातिपुटविपाटनं मम मनागपि नास्ति। अनेन प्रविगलितनिःशेषदेहादिसंस्कारां परां भूमिमेवोपादेयत्वेन ध्वनति। यदुक्तं "सर्वथा त्वन्तरालीने"त्यादि श्रीप्रत्यभिज्ञायां। "सर्वातीतः शिवो ज्ञेयो यं विदित्वा विमुच्यते" इति पूर्वशास्त्रे ॥ १५ ॥

सततफुल्लभवन्मुखपङ्कजो-
दरविलोकनलालसचेतसः ।
किमपि तत्कुरु नाथ मनागिव
स्फुरसि येन ममाभिमुखस्थितिः ॥ १६ ॥

सततेति। सततं फुल्लं नित्यं विकसितं यत्वन्मुखकमलं, "शैवी-मुखमिहोच्यते इति" स्थित्या, त्वत्पराशक्तिरूपं यत्पद्मं तस्य यदुदरं मध्यं, परं तावकं परशक्तिसामरस्यमयं शांभवं रूपं, तस्य विलोकनं समावेशः, तत्र लालसं सातिशयाभिलाषं चेतो यस्य, तस्य मे, किमपि तदसम्भाव्यमुपायप्रदर्शनं, मनागिव हेलामात्रेण कुरु, येन ममाभिमुखस्थितिः सन् स्फुरसि ॥ १६ ॥

त्वदविभेदमतेरपरं नु किं
सुखमिहास्ति विभूतिरथाऽपरा ।
तदिह तावकदासजनस्य किं
कुपथमेति मनः परिहृत्य ताम् ॥ १७ ॥

त्वदविभेदमतेरिति। समावेशस्फुरितायास्त्वदद्वयसंविदः अपरं सुखं विभूत्यादि च न किं चिदस्ति। तस्या एव सर्वातिशायित्वात्। ततः किमिति तावकदासजनस्य तां त्वदविभेदसंविदं परिहृत्य, मनः कुपथमेति व्युत्थानभूमिमेवाऽऽधावति ॥ १७ ॥

क्षणमपीह न तावकदासतां
प्रति भवेयमहं किल भाजनम् ।
भवदभेदरसासवमादरा-
दविरतं रसयेयमहं न चेत् ॥ १८ ॥

क्षणमपीति। यदि भवदद्वयानन्दरसासवमहमविरतं नास्वादयेयं, तत्तव दासतां प्रति क्षणमपि भाजनं न भवेयम्। आनन्दघनत्वत्स्वरूपापरिचितत्वात् ॥ १८ ॥

न किल पश्यति सत्यमयं जन-
स्तव वपुर्द्वयदृष्टिमलीमसः ।



तदपि सर्वविदाश्रितवत्सलः
किमिदमारटितं न शृणोषि मे ॥ १९ ॥

न किलेति। अयं तावज्जनः भेददृष्टिमलीमसत्वात्तव सत्यं चिद्घनं वपुः न पश्यति। तथाऽपि त्वं सर्ववित्सर्वज्ञः, आश्रितवत्सलो भक्तानुकूलः, अतएव स्वयमेवोचितस्वात्मदर्शनदानेऽपि मे किमित्यारटितं आक्रन्दितं न शृणोषि। दर्शनं तावज्झगिति मम आरटितं भक्तिविवशचित्तस्याक्रन्दितमात्रं तु शृणिवति प्रार्थयते ॥ १९ ॥

स्मरसि नाथ कदा चिदपीहितं
विषयसौख्यमथापि मयाऽर्थितम् ।
सततमेव भवद्वपुरीक्षणा-
मृतमभीष्टमलं मम देहि तत् ॥ २० ॥

स्मरसीति। ईहितं प्रयत्नेनार्जितं अथाप्यर्थितं काङ्क्षितं कदा चिदपि मया विषयसौख्यमिति नाथ स्मरसीति निर्यन्त्रणोक्त्या गाढप्रभुपरिचयं ध्वनति। केवलं मम देव भवद्वपुरीक्षणामृतं त्वत्स्वरूपप्रकाशनरसायनमलमभीष्टं। तदेव च देहि प्रयच्छ ॥ २० ॥

किल यदैव शिवाध्वनि तावके
कृतपदोऽस्मि महेश तवेच्छया ।
शुभशतान्युदितानि तदैव मे
किमपरं मृगये भवतः प्रभो ॥ २१ ॥

किलेति। शिवाध्वनि श्रेयःशतशालिनि। परमे शाक्ते मार्गे। कृतपदः प्राप्तविश्रान्तिः ॥ २१ ॥

यत्र सोऽस्तमयमेति विवस्वाँ-
श्चन्द्रमःप्रभृतिभिः सह सर्वैः ।
काऽपि सा विजयते शिवरात्रिः
स्वप्रभाप्रसरभास्वररूपा ॥ २२ ॥

यत्रेति । सा कापि लोकोत्तरा शिवरात्रिः शिवसमावेशभूमिः । समस्तमायीयप्रथायाः संहरणाद्रात्रिरिव रात्रिः । कीदृशी, स्वप्रभाप्रसरेण चित्प्रकाशजृम्भणेन भासनशीलं रूपं यस्याः, तादृशी । स इत्यशेषप्रपञ्चप्रथमाङ्कुरः विवस्वान् प्राणः । चन्द्रमःप्रभृतिभिरपानादिभिः सहाऽस्तमेति प्रशाम्यति । यदि वा । विवस्वान् प्रमाणप्रकाशः । चन्द्रमःप्रभृतयः प्रमेयादयः ॥ २२ ॥

त्र्प्युपार्जितमहं त्रिषु लोके-
ष्वाधिपत्यममरेश्वर मन्ये ।
नीरसं तदखिलं भवदङ्घ्रि-
स्पर्शनामृतरसेन विहीनम् ॥ २३ ॥

अपीति । त्रैलोक्यराज्यमपि त्वन्मरीचिसंस्पर्शं विना विरसं मन्ये ॥ २३ ॥

वत नाथ दृढोयमात्मबन्धो
भवदख्यातिमयस्त्वयैव क्लृप्तः ।
यदयं प्रथमानमेव मे त्वा-
मवधीर्य श्लथते न लेशतोऽपि ॥ २४ ॥

बतेति । आश्चर्यं अयमात्मबन्धो देहादिषु प्रमातृताभिमानः त्वदप्रथारूपः । त्वयैव अतिदुर्घटकारिणा दृढः क्लृप्तः । न तु अन्यस्य शक्तिः । यस्मात्त्वां प्रथमानमेव समावेशे भान्तमेव अवधीर्य न्यग्भाव्य लेशतोऽपि न श्लथते, व्युत्थाने प्राधान्यमेवावलम्बते इत्यर्थः ॥ २४ ॥



महतामपरेश पूज्यमानो
ऽप्यनिशं तिष्ठसि पूजकैकरूपः ।
बहिरन्तरपीह दृश्यमानः
स्फुरसि द्रष्टृशरीर एव शश्वत् ॥ २५ ॥

महतामिति । बहिरन्तः पूजाद्यवसरे । आपातभेदेनैव प्रकाशमानत्वात् । पूज्यमानो दृश्यमानश्च, त्वममरेश देवदेव, महतां भक्तिमतां पूजकैकरूपो द्रष्टृशरीरश्च, समावेशसामरस्याद्बोधमयप्रमात्रेकरूपस्तिष्ठसि स्फुरसि चेति शिवम् ॥ २५ ॥

इति श्रीमदुत्पलदेवाचार्यविरचितस्तोत्रावल्यां सुरसोद्बलनामकचतुर्थस्तोत्रे क्षेमराजकृता विवृतिः ॥

ॐ त्वत्पादपद्मसम्पर्कमात्रसम्भोगसङ्गिनम् ।
गलेपादिकया नाथ मां स्ववेश्म प्रवेशय ॥ १ ॥

ॐ त्वदिति । पादाः मरीचयः । सम्पर्कमात्रसम्भोगः समावेशास्वादः । गलेपादिका हठशक्तिपातक्रमः । स्ववेश्म चित्स्वरूपं, औचित्यात् ॥ १ ॥

भवत्पादाम्बुजरजोराजिरञ्जितमूर्धजः ।
अपाररभसाऽऽरब्धनर्तनः स्यामहं सदा ॥ २ ॥

भवदिति । भवदीयेन पादाम्बुजरजसा ऽनुग्रहप्रवृत्तपरशक्तिकमलपरागेण । रञ्जितमूर्धजः अधिवासितान्तः । प्रसरदूर्ध्वादृष्टशक्त्यंकुरः । तत एव प्रहर्षवशादपारमपर्यन्तं, रभसाऽऽरब्धं झगिति प्रवर्तितं नर्तनं गात्रविक्षेपो मायाप्रमातृताविधूननं येन । नित्यसमावेशविकस्वरतामाशास्ते ॥ २ ॥

त्वदेकनाथो भगवन्नियदेवार्थये सदा ।
त्वदन्तर्वसतिर्मूको भवेयं माऽन्यथा बुधः ॥ ३ ॥

त्वदेकनाथ इति । इयदेव नापरमर्थये । यस्त्वमेवैको नाथो नाथ्यमानः समभिलपणीयो यस्य सः । त्वदन्तर्वसतिश्चिद्घनत्वत्स्वरूपसमाविष्टो मूकोऽपि स्याम् । अन्यथा बुधोऽपि विद्वानपि माभूवम् ॥ ३ ॥

अहो सुधानिधे स्वामिन् अहो मृष्ट त्रिलोचन ।
अहो स्वादो विरूपाक्षेत्येव नृत्येयमारटन् ॥ ४ ॥

अहो इति । प्राग्वन्नित्यसमाविष्टतामाशास्ते । सुधानिधे आनन्दाब्धे । मृष्ट चमत्कारपदपतित । स्वादो अविच्छिन्नमाधुर्य । नृत्येयमिति प्राग्वत् । आरटन् स्फुटं परामृशन् ॥ ४ ॥



त्वत्पादपद्मसंस्पर्शपरिमीलितलोचनः ।
विजृम्भेय भवद्भक्तिमदिरामदघूर्णितः ॥ ५ ॥

त्वत्पादपद्मेति । त्वच्छक्त्यानन्देन अन्तर्मुखीकृतकरणः । विजृम्भेय चित्स्वरूपोन्मज्जनाद्गात्रं विनमयेय चिद्गुणीभावं नयेयम् । कीदृक्—भवति साक्षात्कृते, या भक्तिरासेवा सैव मदिरामदः कादम्बरीचमत्कारः, तेन घूर्णितो महाव्याप्तिं लम्भितः ॥ ५ ॥

चित्तभूभृद्भुवि विभो वसेयं क्वापि यत्र सा ।
निरन्तरत्वत्प्रलापमयी वृत्तिर्महारसा ॥ ६ ॥

चित्तभूभृदिति । चित्तमेव अनुल्लङ्घ्यत्ववासनाश्रयत्वकठोरत्वाभिः भूभृत् । तस्य सम्बन्धिन्यां कस्यां चिद्विवेकप्रदायां भुवि भूमिकायां । वसेयं । यत्र सा इति प्राक् परिशीलिता, महारसा समावेशानन्दमयी, निरन्तरो घनः, त्वत्प्रलापो भवत्परामर्शः, प्रकृतं रूपं यस्यास्तादृशी वृत्तिः स्थितिः ॥ ६ ॥

यत्र देवीसमेतस्त्वमासौधादा च गोपुरात् ।
बहुरूपः स्थितस्तस्मिन्वास्तव्यः स्यामहं पुरे ॥ ७ ॥

यत्रेति । तस्मिन् पुरे त्वदीये पूरके चिदात्मनि रूपे । वास्तव्यः समाविष्टः स्याम् । यत्र आसौधादान्तरात्सुधासमूहरूपात्प्रतिभालक्षणादुच्चाद्धाम्नः । आच गोपुरादिन्द्रियविषयरूपा द्वारात् । त्वं देव्या परशक्त्या समेतो नित्यप्रमुदितो, "न सा जीवकला का चि"दित्यादि नीत्या वससि । बहुरूपो विश्वात्मा । अत्र अनुरणनशक्त्या लौकिकैश्वार्य्यपरिचार्य्यर्थः स्पष्टः । तथोत्तरत्राप्यनुसर्तव्यः ॥ ७ ॥

समुल्लसन्तु भगवन् भवद्भानुमरीचयः
विकसत्वेष यावन्मे हृत्पद्मः पूजनाय ते ॥ ८ ॥

समुल्लसन्त्विति। मरीचयः अनुग्राहिकाः शक्तयः। विकसतु व्याप्तिमासादयतु। तव पूजनाय त्वत्पदसमावेशाय ॥ ८ ॥

प्रसीद भगवन् येन त्वत्पदे पतितं सदा।
मनो मे तत्तदास्वाद्य क्षीवेदिव गलेदिव ॥ ९ ॥

प्रसीदेति। प्रसादोम्भस इव स्वयमेवाविलीभावशान्त्या नैर्मल्यगमनं। एवमुत्तरत्र। त्वत्पदे शाक्ते मार्गे, पतितं लुठितं, तत्तदिति ते ते लोचनइति यद्वर्णयितुमशक्यतां स्फीततां चास्वाद्य वस्तुतो ध्वनति। क्षीवेदिव गलेदिव इति ससन्देहोत्प्रेक्षया सम्भावनालिङ्ग च स्वानुभवसाक्षिकानुत्तरानन्दरसपरवशताशंसां ध्वनति ॥९॥

प्रहर्षाद्वाऽथ शोकाद्वा यदि कुड्याद्घटादपि।
बाह्यादथान्तराद्भावात्प्रकटीभव मे प्रभो ॥ १० ॥

प्रहर्षादिति। वा प्रभृतिशब्दैः यतः कुतश्चित्स्फुटीभव नास्माकं कश्चिद्ग्रहः इत्याह। प्रभो सर्वतः प्रभवनशील ॥ १० ॥

बहिरप्यन्तरापि तत्स्यन्दमानं सदाऽस्तु मे।
भवत्पादाम्बुजस्पर्शामृतमत्यन्तशीतलम् ॥ ११ ॥

बहिरपीति। पादाम्बुजं शीतलमिति प्राग्वत् ॥ ११ ॥

त्वत्पादसंस्पर्शसुधासरसोन्तर्निमज्जनम्।
कोऽप्येष सर्वसम्भोगलङ्घी भोगोऽस्तु मे सदा ॥ १२ ॥

त्वत्पादसंस्पर्श इति। त्वत्पादसंस्पर्शो रुद्रशक्तिसमावेशः। स एव सुधासरः रसायनाब्धिः। तत्र अन्तर्निमज्जनं ब्रुडनं यत्, एष मम कोऽपि असामान्यः भोगः सदाऽस्तु। कीदृक्। सर्वान् सदाशिवपर्यन्तान् भोगान् लङ्घते विरसत्वादभिभवति, तच्छीलः ॥ १२ ॥



निवेदितमुपादत्स्व रागादि भगवन्मया।
आदाय चामृतीकृत्य भुङ्क्ष्व भक्तजनैः समम् ॥ १३ ॥

निवेदितमिति। हे भगवन् चिन्मयस्वात्मन्। आसंसारं यत् मयार्जितं रागादि, तद्वित्तशाठ्यविवर्जनया निवेदितं त्वय्यर्पितं, निःशेषेण वेदितं चेति। तत्स्वरूपमुपादत्स्व गृहाण स्वप्रकाशात्मतामधिष्ठाय समीपे कुरु। अमृतीकृत्येति परशक्तिस्पर्शामृतेन आप्लाव्य। भक्तजनैः सममित्युक्त्या स्वसमावेशतासमये समस्तभक्तानामपि तन्मयतामाशंसति ॥ १३ ॥

अशेषभुवनाहारनित्यतृप्तः सुखासनम्।
स्वामिन् गृहाण दासेषु प्रसादालोकनक्षणम् ॥ १४ ॥

अशेषेति। हे स्वामिन् अशेषभुवनाहारेण नित्यतृप्तः परमानन्दघनः। दासेषु व्याख्यातरूपप्रसादालोकनावसरं गृहाण प्रकाशार्हत्वमधिष्ठापय। कीदृशं—सुखेन आस्यते यत्र तत् आनन्दव्याप्तिमयम् ॥ १४ ॥

अन्तर्भक्तिचमत्कारचर्वणामीलितेक्षणः।
नमो मह्यं शिवायेति पूजयन् स्यां तृणान्यपि ॥ १५ ॥

अन्तर्भक्तीति। अन्तः पूर्णाहन्तायां भक्तिचमत्कारामीलितेक्षण इति प्राग्वत्। मह्यं चिद्रूपाय शिवाय नमः इति कृत्वा तृणान्यपि पूजयन् स्यां शिवतया परामृशेयम् ॥ १५ ॥

अपि लब्धभवद्भावः स्वात्मोल्लासमयं जगत्।
पश्यन् भक्तिरसाभोगैर्भवेयमवियोजितः ॥ १६ ॥

अपीति। लब्धो भवद्भावः त्वदैकात्म्यं येन। अत एव स्वा-





त्मनः शिवरूपस्योल्लास एव प्रकृतं रूपं यस्य तथाविधं जगत् विश्वं पश्यन्, भक्तिरसाभोगैः समावेशप्रबलचमत्कारैः अवियोजितः स्याम्। "तमनिष्टेषु भोगेषु योजयन्ति विनायकाः" इत्याम्नायस्थित्या मा कदा चित् स्वात्माभिमानविनायको भक्त्यन्तरायं मे कार्षीदिति यावत् ॥ १६ ॥

आकाङ्क्षणीयमपरं येन नाथ न विद्यते ।
तव तेनाऽद्वितीयस्य युक्तं यत्परिपूर्णता ॥१७॥

आकाङ्क्षणीयमिति। सर्वतो निराकाङ्क्षत्वात्त्वमेव परिपूर्ण इत्यर्थः ॥ १७ ॥

हस्यते नृत्यते यत्र रागद्वेषादि भुज्यते ।
पीयते भक्तिपीयूषरसस्तत्प्राप्नुयां पदम् ॥१८॥

हस्यत इति। नृत्यते अन्तः प्रहर्षभरेण देहादिप्रमातृता दोधूयते। भुज्यते ग्रस्यते रागद्वेषादीत्यनेन पुर्यष्टकप्रमातृताया गुणीभाव उक्तः। पीयते चमत्क्रियते भक्तिपीयूषरसः समावेशानन्दप्रसरः। सर्वस्य च हासनृत्यप्रधानभोजनपानक्रिया स्पृहणीया सा त्विह अलौकिकत्वेनोक्ता ॥ १८ ॥

तत्तदपूर्वामोदत्वच्चिन्ताकुसुमवासना दृढताम् ।
एतु मम मनसि यावन्नश्यतु दुर्वासनागन्धः ॥१९॥

तत्तदिति। स स इति विचित्रः, अपूर्वोऽलौकिकः, आमोदो हर्षो यस्याः त्वच्चिन्तायाः, सैव स्पृहणीयत्वात्कुसुमवासना। दृढतां प्ररूढत्वं। ममैतु मनसि। यावद्रागादिदुर्वासना नश्यतु ॥ १९ ॥

क्व नु रागादिषु रागः क्व च हरचरणाम्बुजेषु रागित्वम्।
इत्थं विरोधरसिकं बोधय हितमस्मर मे हृदयम् ॥२०॥



क्वन्विति। मम हृदयं विरोधरसिकं समावेशे त्वत्परं व्युत्थाने तु विषयोन्मुखं। हितं बोधय विवेकितं कुरु येन व्युत्थाने रागादिरसिकतां त्यक्त्वा त्वदनुरक्तमेवास्ते ॥ २० ॥

विचरन्योगदशास्वपि विषयव्यावृत्तिवर्त्तमानोऽपि ।
त्वच्चिन्तामदिरामदतरलीकृतहृदय एव स्याम् ॥२१॥

विचरन्निति। योगदशाः भूमिकाज्ञानानि। विषयेभ्यो व्यावृत्तयः इन्द्रियेभ्यः प्रत्याहाराः। तत्र वर्तमानः। त्वच्चिन्ता त्वत्प्राप्तिरेव मदिरामदः। तेन तरलीकृतं त्याजितमितभूमिकाप्ररूढि क्षीबस्येव घूर्णमानं, निजचमत्कारव्यतिरेकेण कुत्र चिदपि भूमिकाज्ञानादावरोहत् हृदयं यस्य, तादृगेव स्याम्। अपिशब्देन प्रसङ्गापतितत्वेन अनादरणीयतामाह ॥ २१ ॥

वाचि मनोमतिषु तथा शरीरचेष्टासु करणरचितासु।
सर्वत्र सर्वदा मे पुरःसरो भवतु भक्तिरसः ॥२२॥

वाचीति। मनोमतयः कल्पनाप्रधाना धियः। करणरचितासु बुद्धिकर्मेन्द्रियकार्यासु। दर्शनश्रवणादिपूर्वकत्वात्सर्वप्रवृत्तीनां। सर्वत्र सर्वावस्थासु। पुरःसर आदावेव स्फुरन्। भक्तिरसः समावेशचमत्कारः ॥ २२ ॥

शिव शिव शिवेति नामनि
तव निरवधि नाथ जप्यमानेऽस्मिन् ।
आस्वादयन् भवेयं
कमपि महारसमपुनरुक्तम् ॥ २३ ॥

शिवेति। जप्यमाने प्रकृष्टमन्त्रमयतया परामृश्यमाने। अस्मि-

न्निति स्वानुभवैकसाक्षिके अनुत्तरे। भूयो नामग्रहणं समावेशवैवश्यं ध्वनति । कमपीति अलौकिकम् ॥ २३ ॥

स्फुरदनन्तचिदात्मकविष्टपे
परिनिपीतसमस्तजड़ाध्वनि ।
अगणितापरचिन्मयगण्डिके
प्रविचरेयमहं भवतोऽर्चिता ॥ २४ ॥

स्फुरदिति । स्फुरत् अनन्तमपरिच्छिन्नं यच्चिदात्मकं विष्टपं भुवनं विश्वविश्रान्तिस्थानं तत्र । कीदृशे–परितः समन्तान्निपीतः समस्तो निःशेषो जडो वेद्यरूपो ध्वान्तत्वादिप्रसरो येन । तथा न गणिता अपरा चिन्मयी गण्डिका पुरी यत्र । शिवात्मकचिद्रूपव्यतिरेकेणान्यस्याभावात् । अनेन भिन्नशिववादनिरासउक्तः। तत्र प्रकर्षेण विचरेयं समावेशेन प्रसरेयं। कीदृक्। भवतः प्रभोरर्चिता अद्वयरूपत्वत्पूजैकनिष्ठः ॥ २४ ॥

स्ववपुषि स्फुटभासिनि शाश्वते
स्थितिकृते न किमप्युपयुज्यते ।
इति मतिः सुदृढा भवतात् परं
मम भवच्चरणाब्जरजःशुचेः ॥ २५ ॥

स्ववपुषीति। स्वस्मिन् अनपायिनि वपुषि चिदात्मस्वरूपे । स्फुटभासिनि प्रकाशघने। शाश्वते नित्ये । स्थितिं कर्तुं न किमपि ध्यानजपादिकमुपयुज्यते उक्तरूपत्वादेव। एतादृशी । मम भवच्चरणाम्बुजरजःशुचेः त्वच्छक्तिकमलप्रसरपरिशीलनेन शुद्धस्य। सुदृढा मतिः निश्चलनिश्चयरूपा धीः । परमतिशयेन भवेत्। नित्योदितसमावेशैकघनः स्यामिति यावत् ॥ २५ ॥



किमपि नाथ कदाचन चेतसि
स्फुरति तद्भवदंघ्रितलस्पृशाम् ।
गलति यत्र समस्तमिदं सुधा-
सरसि विश्वमिदं दिश मे सदा ॥ २६ ॥

किमपीति । हे नाथ भवदङ्घ्रितलस्पृशां त्वच्छक्तिस्पर्शशालिनां । कदा चिदवसरे । तत्किमपि असामान्यं वस्तु चेतसि स्फुरति यत्र समस्तमिदं विश्वं परमानन्दसागरे गलति तन्मयीभवति । तत्तथाविधमिदं वस्तु मह्यं सदा दिश प्रयच्छ । यथा नित्यसमावेशानन्दघन एव भवामि इति शिवम् ॥ २६ ॥

इति श्रीमदुत्पलदेवाचार्यविरचितस्तोत्रावलौ स्वबलनिदेशनाभिधाने
पञ्चमस्तोत्रे श्रीक्षेमराजकृता विवृतिः ॥

---

ॐ तत्सत् ॐ

क्षणमात्रमपीशान वियुक्तस्य त्वया मम ।
निबिडं तप्यमानस्य सदा भूया दृशः पदम् ॥१॥

क्षणमात्रमिति । व्युत्थानरूपे क्षणमात्रवियोगे । गाढानुरागवैवश्यान्निविडमत्यर्थं तप्यमानस्य स्वयमेव सन्तापमनुभावयतो न तु विषयविवशस्य । मम सदा दृशो ज्ञानस्य । पदं भूयाः परिस्फुरेरित्यर्थः ॥ १ ॥

वियोगसारे संसारे प्रियेण प्रभुणा त्वया ।
अवियुक्तः सदैव स्यां जगताऽपि वियोजितः ॥२॥

वियोगेति । अवियुक्तः समाविष्टः । जगता क्षित्यादिशिवान्तेन विश्वेनापि वियोजितो विश्लेषितः । समावेशे च विश्वं प्रत्युत तन्मयो वस्तुतो भवत्येव ॥ २ ॥

**कायवाङ्मनसै र्यत्र यामि सर्वं त्वमेव तत् ।**
**इत्येष परमार्थोऽपि परिपूर्णोऽस्तु मे सदा ॥३॥**

कायेति । यत्र विषये त्वमेव तदिति चिदेकसारत्वात् इत्येष परमार्थ इति "यत्र यत्रे" त्युपक्रम्य "सर्वं शिवमयं यतः" इत्याम्नातत्वात् । परिपूर्ण इति समावेशेन साक्षात्कृतः ॥ ३ ॥

**निर्विकल्पो महानन्दपूर्णो यद्वद्भवाँस्तथा ।**
**भवत्स्तुतिकरी भूयादनुरूपैव वाङ्मम ॥ ४ ॥**

निर्विकल्प इति । निर्विकल्पः शुद्धचिद्रूपः । तथेति निर्विकल्पा महानन्दमयी च । अत एव स्तुत्ये समुचितत्वादनुरूपा॥४॥

**भवदावेशतः पश्यन् भावं भावं भवन्मयम् ।**
**विचरेयं निराकाङ्क्षः प्रहर्षपरिपूरितः ॥ ५ ॥**

भवदिति । भावं भावमिति वीप्सया विश्वाक्षेपः । निराकाङ्क्ष इति विशेषणद्वारको हेतुः प्रहर्षेत्यादिः । प्रकृष्टेन महानन्दात्मना हर्षेण परिपूरितत्वादेव हि निराकाङ्क्षता भवति ॥ ५ ॥

**भगवन्भवता पूर्णं पश्येयमखिलं जगत् ।**
**तावतैवास्मि सन्तुष्टस्ततो न परिखिद्यसे ॥६॥**

भगवन्निति । भवतश्चिन्मयस्य सम्बन्धितया प्रदेशोऽपि ब्रह्मणः सार्वरूप्यमनतिक्रान्तश्चाविकल्पश्चेति स्थित्याऽखिलं जगत् पूर्णं पश्येयम् । भवता पूर्णमितिपाठे तु स्पष्टोऽर्थः । सन्तुष्टः



परमानन्दमयीं प्रीतिमितः । अतो हेतोर्न परिखिद्यसे, हे भगवन् चिद्रूपस्वात्मन्, अणिमादिप्रार्थनाभिः न व्याकुलीक्रियसे इत्यर्थः ॥ ६ ॥

**विलीयमानास्त्वय्येव व्योम्नि मेघलवा इव ।**
**भावा विभान्तु मे शश्वत्क्रमनैर्मल्यगामिनः ॥७॥**

विलीयमाना इति । यत एवोल्लासिताः तत्र त्वय्येव क्रमात्क्रमं संस्कारशेषतया विगलन्ते । यथा व्योम्नि मेघलवाः । ते हि तत एव प्रसृतास्तत्रैव विलीयन्ते । शश्वत्सदा, क्रमेण नैर्मल्यं शुद्धचिद्रूपत्वं गच्छन्ति तच्छीला इत्यनेन चिदात्मतैव तेषां तात्त्विकं रूपमिति ध्वनति ॥ ७ ॥

**स्वप्रभाप्रसरध्वस्तपर्यन्तध्वान्तसन्ततिः ।**
**सन्ततं भातु मे कोऽपि भवमध्याद्भवन्मणिः ॥८॥**

स्वप्रभेति । भवमध्यात् विश्वस्य मध्यतः । कोऽपीति शुद्धचिद्रूपः । भवानेव मणिः सर्वाभिलाषपूरकत्वान्मम सन्ततमव्युत्थानं कृत्वा भातु समावेशेन स्फुरतु । स्वप्रभाप्रसरेण निजरश्मिपरिस्पन्देन ध्वस्ता पर्यन्ता ध्वान्तसन्ततिरख्यातिप्रवृत्तिर्येन ॥ ८ ॥

**कां भूमिकां नाधिशेषे किं तत्स्याद्यन्न ते वपुः ।**
**श्रान्तस्तेनाऽप्रयासेन सर्वतस्त्वामवाप्नुयाम् ॥९॥**

कामिति । श्रान्त इत्यप्रत्यभिज्ञातस्वरूपत्वाच्चिरं संसारे खिन्नः । त्वां चिद्रूपमप्रयासेन ध्यानपूजाद्यायासं विना । सर्वतो यतः कुतश्चिदवाप्नुयाम् समावेशेन स्वीकुर्याम् । यतः कां भूमिकामवस्थितिं नाधिशेषे नाधितिष्ठसि । तद्बाह्यमान्तरं वा वस्तु किं यत्तव

वपुः स्वरूपं न स्यात् ॥ ९ ॥

भवदङ्गपरिष्वङ्गसम्भोगः स्वेच्छयैव मे ।
घटतामियति प्राप्ते किं नाथ न जितं मया ॥१०॥

भवदिति। अङ्गपरिष्वङ्गः परमसमावेशस्पर्शः। स्वेच्छया न तु कादाचित्कत्वेन। किं न जितं सर्वोत्कृष्टेन मयैव स्थितमित्यर्थः ॥ १० ॥

प्रकटीभव नान्याभिः प्रार्थनाभिः कदर्थनाः ।
कुर्मस्ते नाथ ताम्यन्तस्त्वामेव मृगयामहे ॥११॥

प्रकटीति। अन्याभिरर्थनाभिर्याच्ञाभिः कदर्थनाः व्याकुलताः तव चिद्रूपरस्य स्वात्मनः न कुर्मः, यतस्ताम्यन्तो गाढानुरागविवशाः त्वामिव चिद्रूपं न त्वन्यं कं चित्, मृगयामहे अन्विष्यामः, अतः प्रकटीभव प्रकाशस्वेति शिवम् ॥ ११ ॥

इति श्रीमदुत्पलदेवाचार्यविरचितस्तोत्रावलौ अध्वविस्फुरणाख्ये
षष्ठे स्तोत्रे श्रीक्षेमराजाविरचिता विवृतिः ॥ ६ ॥

---

ॐ त्वय्यानन्दसरस्वति समरसतामेत्य नाथ मम चेतः।
परिहरतु सकृदियन्तं भेदाधीनं महाऽनर्थम् ॥ १ ॥

त्वयीति। आनन्दसरस्वति हर्षसमुद्रे। समरसतां समावेशकैवल्यं। सकृदेकवारं। परिहरतु यथा न पुनर्भवतीत्यर्थः। इयन्तमपर्यन्तम् ॥ १ ॥

एतन्मम नत्विदमिति रागद्वेषादि निगडदृढमूले ।
नाथ भवन्मयतैक्यप्रत्ययपरशुः पतत्वन्तः ॥ २ ॥



एतदिति। एतत्सुखं तद्धेतुरूपं मम अस्तु, इदं तु दुःखं तद्धेतुरूपं मम माभूदित्येवं भेदावग्रहरूपरागद्वेषाद्यात्मनो निगडस्य बन्धनस्य दृढे कठिने मूले अन्तर्मध्ये। भवन्मयतैक्ये प्रत्ययः चिदैक्यप्रतीतिरेव परशुः कुठारः ॥ २ ॥

गलतु विकल्पकलंकावली समुल्लसतु हृदि निरर्गलता।
भगवन्नानन्दरसप्लुताऽस्तु मे चिन्मयी मूर्तिः ॥ ३ ॥

गलत्विति। विकल्पानां भेदप्राधान्यात्कलङ्कता। निरर्गलता निःशङ्कता स्वातन्त्र्यं। मम चिन्मयी मूर्तिः प्रमातृता आनन्दरसप्लुता समावेशानन्दोच्छलिता अस्तु ॥ ३ ॥

रागादिमयभवाण्डक-
लुठितं त्वद्भक्तिभावनाम्बिका तैस्तैः ।
आप्याययतु रसैर्मां
प्रवृद्धपक्षो यथा भवामि खगः ॥ ४ ॥

रागादीति। रागादिमये भवाण्डके संसारगोलके। लुठितमधोधः पतन्तं मां। त्वद्भक्तिभावनैवाम्बिका माता। तैस्तैः परमानन्दसारैः रसैराप्याययतु तर्पयतु। यथा प्रवृद्धपक्षः प्रकर्षेणासादितव्याप्तिज्ञानक्रियामयस्वात्मपक्षः। खगो निर्मलदिग्गगनगतिर्भवामि। अण्डलुठितश्च पक्षी मात्रा रसैराप्यायितः खे गच्छतीति श्लेषोपमाध्वनिः ॥ ४ ॥

त्वच्चरणभावनाऽमृत-
रससारास्वादनैपुणं लभताम् ।

चित्तमिदं निःशेषित-
विषयविषासङ्गवासनाऽवधि मे ॥ ५ ॥

त्वदिति। त्वच्चरणभावना त्वद्भक्तिचिन्ता, सैवामृतरससार उत्कृष्टः आनन्दप्रसरः, तत्र आस्वादे चमत्कारे, नैपुणं वैदग्ध्यं, ममेदं चित्तं लभताम्। कीदृशम्—निःशेषितः समाप्तो विषयविषासंगवासनानां वेद्यहालाहलव्यसनसंस्कारणामवधिर्मर्यादा येन॥५॥

त्वद्भक्तितपनदीधितिसंस्पर्शवशान्ममैष दूरतरम्।
चेतोमणिर्विमुञ्चतु रागादिकतप्तवन्हिकणान् ॥६॥

त्वदिति। मम चेतोमणिरौचित्याच्चित्तसूर्यकान्तरत्नं, त्वद्भक्तितपनदीधितिसंस्पर्शवशाद्भवत्समावेशसूर्यकरासङ्गात्, रागादिकानेव तप्तवन्हिकणान् द्रष्टुमशक्यान् स्फुलिङ्गान्, दूरतरमत्यर्थं, मुञ्चतु जहातु ॥ ६ ॥

तस्मिन्पदे भवन्तं सततमुपश्लोकयेयमत्युच्चैः।
हरिहर्यश्वविरिञ्चा अपि यत्र बहिः प्रतीक्षन्ते॥७॥

तस्मिन्निति। तस्मिन्नत्युच्चैः पदे परशक्तिमार्गे त्वामुपश्लोकयेयं श्लोकैः स्तवेयं सम्यक् परामृशेयम्। हर्यश्वः इन्द्रः। बहिः प्रतीक्षन्ते। लिप्सवोऽपि वार्तानभिज्ञा इति यावत् ॥ ७ ॥

भक्तिमदजनितविभ्रम-
वशेन पश्येयमविकलं करणैः।
शिवमयमखिलं लोकं
क्रियाश्च पूजामयीः सकलाः ॥ ८ ॥



भक्तीति। भक्तिमदेन समावेशप्रहर्षेण जनितो यो विभ्रमो लोकोत्तरो विलासस्तद्वशेन। करणैश्चक्षुरादिभिः। अविकलं पूर्णं कृत्वा। करणप्रसरात्मनि व्युत्थानेऽपि श्रीभैरवीयमुद्राप्रवेशयुक्त्या समाविष्ट एव भूत्वाऽखिलं लोकं विश्वं लोकं शिवमयं, क्रियाश्च वाङ्मनःकायव्यापृतीः सकलाः पूजामयीश्चिन्मयस्वरूपोल्लासरूपाः पश्येयम् ॥ ८ ॥

मामकमनोगृहीत-
त्वद्भक्तिकुलाङ्गनाऽणिमादिसुतान्।
सूत्वा सुबद्धमूला
ममेति बुद्धिं दृढीकुरुताम् ॥ ९ ॥

मामक इति। मामकेन मनसा गृहीता प्राणेशत्वेन स्वीकृता येयं भक्तिरेव अतिस्पृहणीयत्वात्सर्वजनागोचरत्वाच्च कुलाङ्गना पत्नी, अथ च आगमभाषया कुलेश्वरीरूपा। सा अणिमादीनेव सुतान् सूत्वा, अन्तः स्थितानेव अभिव्यक्तिं नीत्वा, महाव्याप्त्या सुस्फुटतया परामृश्य, सुष्ठु बद्धमूला प्ररूढा सती, मम इयद्विश्वं न तु अन्यस्येति बुद्धिं दृढीकुरुतां प्ररूढिं नयतु। अत्र च अभेदसारा अणिमादयोऽभिप्रेताः। तथाहि चित्पद एव स चान्तर्भावक्षमत्वादणिमा। व्यापकत्वान्महिमा। भेदमयगौरवाभावाल्लघिमा। विश्रान्तिस्थानत्वात्प्राप्तिः। विश्ववैचित्र्यग्रहणात्प्राकाम्यं। अखण्डितत्वादीशित्वं। सर्वसहत्वाद्यत्रकामावसायित्वं च। सततः परिपूर्णतया विद्यते,ऽन्यत्र तु त्वत्प्रसादादातिपरिमित मितिकृत्वा पूर्णमेवात्र तदभिहितं, न त्वन्यत्, पूर्णत्वेन नैराकाङ्क्ष्यात्। "आसतां तावदन्यानि दैन्यानी"त्युक्ते व्याघातप्र-

सङ्गाच्च। एवमुत्तरत्रापि स्मर्तव्यमिति शिवम्* ॥ ९ ॥

इति श्रीमदाचार्योत्पलविरचितायां स्तोत्रावलौ त्रिपुरविजय-
नामधेये सप्तमस्तोत्रे श्रीक्षेमराजकृता विवृतिः ॥

---

ॐ यः प्रसादलव ईश्वरस्थितो
या च भक्तिरिव मामुपेयुषी।
तौ परस्परसमन्वितौ कदा
तादृशे वपुषि रूढिमेष्यतः ॥ १ ॥

यइति। मायाकालुष्योपशान्त्या चितो नैर्मल्यं प्रसादः। तस्य लवः अल्पता। पूर्णतायां तु देहापगमाच्छिवतैव। ईश्वर इति सप्तम्यनन्यभावे। ईश्वरे एव स्थितइत्यर्थः स एव हि चिद्रूपः तथा स्वयमेव प्रसीदति भक्तिप्रसादात्। ईश्वरस्य रूपोपमाव्यञ्जकत्वम्। इवशब्दो भक्तेः परिमिततामाह। काष्ठाप्राप्ता ह्यसौ मोक्षास्वादमय्येव। उपेयुषी उपगतवती। तौ भक्तिप्रसादौ परस्परं सम्यगन्वितौ तरुणाविव प्रेमनिर्भरतया स्वानुरूप्येण सम्बद्धौ। तादृशे वपुषीति परानन्दघनतैकमये पूर्णे स्वरूपे। रूढिं विश्रान्तिम्† ॥ १ ॥

---

* स्फुटार्थस्त्वयमेव प्रतिभाति यथा—कुलाङ्गनायां कुलवत्यां सत्यां पत्न्यां पुत्रवत्यां जातायां यथा पत्युर्ममता दृढतरा भवति तथा स्वभावतो न तु मदिच्छया प्रसूतानिमादिकायां भक्त्यां मम चेतसो ममता सुदृढा भवतु मम मनसि तव भक्तिः परां स्थिरतां लभतामिति यावत्। अस्य पद्यस्य भक्तिशार्क्ष्ये तात्पर्य्यमिति शिवम् ॥

† यः प्रसादकणो मद्विषयक ईश्वरे स्थितः। ईश्वरप्रसादकणिकां विनाऽल्पीयस्या अपि भक्तेरसम्भवात्। या च भक्तिरिव, अपूर्णत्वाद् भक्त्याभासो, मयि स्थिता। ईश्वरप्रसादकणिकेव गौणभक्तिरूपेण या मां प्राप्तवतीत्यर्थः। ते इमे प्रसादभक्ती परस्परं वर्द्धयन्त्यौ कदा पूर्णस्वरूपलाभात् परमानन्दैकवपुषि परिणतिं गमिष्यत इति स्पष्टोऽर्थः ॥



त्वत्प्रभुत्वपरिचर्वणजन्मा
कोऽप्युदेतु परिपोषरसोऽन्तः।
सर्वकालमिह मे परमस्तु
ज्ञानयोगमहिमादि विदूरे ॥ २ ॥

त्वदिति। त्वत्प्रभुत्वस्य त्वत्स्वामिकत्वस्य "गर्जामि बतेति" प्रागुक्तश्लोकयुक्त्या यत्परिचर्वणं ततो जन्म यस्य। मम कोऽप्यलौकिकः परितोषरस आनन्दप्रसरः। इहेति जगति। सर्वकालं व्युत्थानावसरेऽपि। परं केवलमुदेतु उल्लसतु। ज्ञानं विश्वमयस्वात्मप्रतिपत्तिः। योगस्तत्तद्भूमिकालाभः। तयोर्महिमा प्रकर्षः। आदिपदात्ततत्सिद्ध्युदयरूपः फलम् ॥ २ ॥

लोकवद्भवतु मे विषयेषु
स्फीत एव भगवन्परितर्षः।
केवलं तव शरीरतयैतान्
लोकयेयमहमस्तविकल्पः ॥ ३ ॥

लोकवदिति। महार्थमुद्रामुद्रितस्योक्तिः। हे भगवन् मम लोकस्येव विषयेषु रूपादिषु स्फीतो बहल एव परितर्षः स्पृहयालुता अस्तु। किं तु एतान्विषयानहं अस्तविकल्पो गलितभेदप्रतिपत्तिः सन्, तव चिदात्मनः शरीरतया अहंतासारत्वेन, लोकयेयं पश्येयम् ॥ ३ ॥

देहभूमिषु तथा मनसि त्वं
प्राणवर्त्मनि च भेदमुपेते।

संविदः पथिषु तेषु च तेन
स्वात्मना मम भव स्फुटरूपः ॥ ४ ॥

देहभूमिषु इति । जरामरणाद्यवस्थासु । मनसि कल्पनासारे । प्राणवर्त्मनि दुःखसुखादिस्पर्शमये । संविदः पथिषु नीलादिज्ञानेषु । तेषु इति विचित्रेषु । भेदमुपेते इति नपुंसकशेषः । सर्वस्मिन्नस्मिन्नभिहिते प्रकारे भेदमये सतीति यावत् । तेनेति स्वात्मनि चमत्कृतेन । चिद्धनेन स्वात्मना स्वरूपेण । मम स्फुटरूपः स्वप्राधान्येन स्फुरन् भव ॥ ४ ॥

निजनिजेषु पदेषु पतन्त्विमाः
करणवृत्तय उल्लसिता मम ।
क्षणमपीश मनागपि मैव भूत्
त्वदविभेदरसक्षतिसाहसम् ॥ ५ ॥

निजेति । इमाः मम करणवृत्तयश्चक्षुरादिसंविदेव्यः । उल्लसिताः अलौकिकेन निजौजसा सोल्लासाः । स्वेषु स्वेषु रूपादिषु विषयेषु प्रसरन्तु । त्वदविभेदरसक्षतिः समावेशच्युतिः सैव साहसमविमृश्यकारिता मैवाभूत् । सर्वत्र विषयेषु परितर्षः आकाङ्क्षा । इह तु तत्र संविदाम्प्रसर इति विशेषः ॥ ५ ॥

लघुमसृणसिताच्छशीतलं
भवदावेशवशेन भावयन् ।
वपुरखिलपदार्थपद्धते-
र्व्यवहारानतिवर्तयेय तान् ॥ ६ ॥



लघ्विति । भवदावेशवशेन मायीयगुरुत्वहान्या लघु, सुखस्पर्शत्वान्मसृणं, प्रकाशघनत्वात्सितं, अच्छं शीतलं चेति प्राग्वत्, भावयन् सम्पादयन्, निखिलायाः पदार्थपद्धतेः मातृमेयराशेः सम्बन्धिनो व्यवहारान् लौकिकान् परिस्पन्दान्, अतिवर्तयेय निवर्तयेय ॥ ६ ॥

विकसतु स्ववपुर्भवदात्मकं
समुपयान्तु जगन्ति ममाङ्गताम् ।
व्रजतु सर्वमिदं द्वयवल्गितं
स्मृतिपथोपगमेप्यनुपाख्यताम् ॥ ७ ॥

विकसत्विति । स्वं चिन्मयँ भवदात्मकं, वपुः स्वरूपं, विकसतु । अत एव जगन्ति धरादिसदाशिवान्तानि । मम अङ्गतामभिन्नतां, सम्यक् अपुनरुत्थानेनोपयान्तु । ततश्च सर्वं द्वयवल्गितं भेदविजृम्भितं, स्मृतिपथोपगमे अनुपाख्यतां स्मृतेर्विषयतां, व्रजतु ॥ ७ ॥

समुदियादपि तादृशतावका-
ननविलोकपरामृतसंप्लवः ।
मम घटेत यथा भवदद्वया-
प्रथनघोरदरीपरिपूरणम् ॥ ८ ॥

समुदियादिति । भवदद्वयाप्रथनं चिदैक्याप्रथा, सैव घोरा दुष्पूरा संसारभयप्रदा दरी खदा, तस्याः परिपूरणम् चिदैक्यसाक्षात्कारः, मम यथा घटेत तथा तादृशं, परमानन्दनदीप्रसरहेतुः यत्तावकमाननं शैवीमुखमित्यादि स्थितसा परशक्ति-

रूपं, तेन यो विलोको, विलोकने अनुग्रहः, तस्य वा विलोकः स्मरणं, स एव परामृतसंप्लवः परस्पर्शरसौघोऽपि समुदियादिति रुद्रशक्तिसमावेशप्रकर्षमाशास्ते ॥ ८ ॥

अपि कदा चन तावकसङ्गमा-
ऽमृतकणाच्छुरणेन तनीयसा ।
सकललोकसुखेषु पराङ्मुखो
न भवितास्म्युभयच्युत एव किम् ॥ ९ ॥

अपीति । तावकसङ्गमस्त्वत्समावेश एवामृतकणाच्छुरणं सुधाशीकराप्लावः । तनीयसा प्रसरन्निर्मलस्वरूपेण । सकलेषु लौकिकेषु सुखेषु, "सर्वं दुःखं विवेकिन" इति स्थित्या हेयेष्वपि परामृताच्छुरितत्वात्पराङ्मुखो न भवितास्मि संमुख एव भविष्यामि । कीदृक्—उभयस्माद्द्वैताच्च्युत एव, हेयोपादेयहान्या सर्वमभेदेन पश्यन्नित्यर्थः * ॥ ९ ॥

---

* नेयं व्याख्या विचारकाणां हृदयं गच्छति । तथाहि लौकिकसुखेषु सम्मुखीभावो नेष्यते शिवावेशपरमामृतकणदिग्धेनाऽपि । तादृशप्रवृत्ते प्राकृतजनस्यैव स्वभावासिद्धत्वात् । न चोभयशब्दो द्वैते रूढः, तस्य निर्दिष्टवस्तुद्वयबोधकत्वात्, द्वैतशब्दस्य च ब्रह्मातिरिक्तनिखिलप्रपञ्चबोधने प्रसिद्धत्वात् । "उभयस्माद्द्वैताच्च्युत" इति विशेषणञ्च निरस्तद्वैतदर्शने पुरुषे नैव कथञ्चिदपि सङ्गच्छते, च्युत इति विशेषणस्योत्तमपदात्पतित एव प्रयोगौचित्यात्, विधुतद्वैते परमपदारूढे प्रयोगायोगाच्च । काकौ किमिति पदस्य पद्यान्ते पठितस्योपेक्षा च दृश्यते । कोऽर्थस्तर्हि पद्यस्यास्येत्याकाङ्क्षायामुच्यते । परमशिवैक्यध्यानानन्दमविच्छिन्नं लब्धुकामस्य भक्तस्य स्तोत्रकृतो व्युत्थानदशायां विषयसुखलेशेच्छयाऽपि कथञ्चिदुत्पन्नया तप्यमानस्य विलपितमेतत् । तावकसङ्गम एव त्वत्समावेश एवाऽमृतं, तत्कणस्य तनीयसाऽपि आच्छुरणेन सूक्ष्मेणाप्यभ्युक्षणेन तृप्तो भूत्वेति शेषः । अपि कदाचन सकललोकसुखेषु पराङ्मुखो न भवितास्मि किं, सकलवैषयिकसुखानि कदाचिन्नहास्यामि किम् । किमिति काक्वा नैर्वेद्यवैराग्यं व्यज्यते । तथा च श्रीशङ्कराचार्य्यस्वामिकृतशतश्लोक्याम् नैर्वेद्यं ज्ञानगर्भं द्विविधमभिहितं तत्र वैराग्यमाद्यं । प्रायोदुःखावलोकाद्भवति गृहसुहृत्पुत्रवित्तैषणादेरित्यादि (१४) । सम्प्रत्यहं कीदृशः-शैवमार्गात् लौकिकपदव्याश्च च्युत एवेति शिवम् ।



सततमेव भवच्चरणाम्बुजा-
करचरस्य हि हंसवरस्य मे ।
उपरि मूलतलादपि चान्तरा-
दुपनमत्वज भक्तिमृणालिका ॥ १० ॥

सततमिति । मम हंसवरस्य भेदाभेदयोः हानसमादानधर्मिणो, व्याख्यातदृशा सततमेव भवच्चरणाम्बुजमाकर उत्पत्तिस्थानं पराशक्तिभूस्तत्र विचारिणः । भक्तिरेव मृणालिका बिसाङ्कुरः । उपनमतु उपभोग्यमस्तु । उपरीत्यादि प्रवेशमध्यविश्रान्तिभूमिभ्यः सर्वाभ्य एवेत्यर्थः । हंस आत्मा ॥ १० ॥

उपयान्तु विभो समस्तवस्तू-
न्यपि चिन्ताविषयं दृशः पदं च ।
मम दर्शनचिन्तनप्रकाशा-
ऽमृतसाराणि परं परिस्फुरन्तु ॥ ११ ॥

उपयान्तु इति । चिन्ताविषयं कल्पन्ताम् । दृशः पदं साक्षात्कार्यत्वात् । दर्शनचिन्तनयोरविकल्पसविकल्पयोः । प्रकाशामृतं बोधरसायनमेव सारमुत्कृष्टं रूपं येषां । तानि हेयोपादेयकलङ्कशून्यानि समस्तानि वस्तूनि । परं केवलं । परितः समन्तात् स्फुरन्तु ॥ ११ ॥

परमेश्वर तेषु तेषु कृच्छ्रे-
ष्वपि नामोपनमत्स्वहं भवेयम् ।
न परं गतभीस्त्वदङ्गसङ्गादु-
पजाताधिकसम्मदोऽपि यावत् ॥ १२ ॥

परमेश्वरेति । कृच्छ्रेषु केवलेषु केवलमहं गतभीः सक्तभयस्त्वदङ्गसङ्गात् रुद्रशक्तिसमावेशात्, यावदुपजातः अधिकः प्रकृष्टः सम्मदो हर्षो यस्य तादृगपि भवेयम् । अधिकशब्दस्यायमाशयः । यत् तत्तद्दुःखेष्वप्युदितेष्वविलुप्तस्थितिः ॥ १२ ॥

भवदात्मनि विश्वमुम्भितं
यद्भवतैवाऽपि वहिः प्रकाश्यते तत् ।
इति यद्दृढनिश्चयोपजुष्टं
तदिदानीं स्फुटमेव भासताम् ॥ १३ ॥

भवदिति । यद्विश्वं व्योमकलातः कालानलान्तं भवदात्मनि उम्भितं त्वच्चित्सूत्रप्रोतं, तद्भवतैव न तु अन्येन । बहिरिति तत्प्रमात्रपेक्षया बाह्यत्वेन प्रकाश्यते । अपिशब्दो बहिःप्रकाशनेऽपि अन्तःप्रकाशाविरहमाह । इति यद्वस्तु वाक्यार्थरूपं दृढेन निश्चयेन उप आत्मसमीपे, जुष्टं प्रीत्या सेवितं समावेशेनास्वादितं, तदिदानीमिति व्युत्थानेऽपि, स्फुटमेव भासताम् प्रत्यक्षीभवतु इति शिवम् ॥ १३ ॥

इति श्रीमदुत्पलदेवाचार्यविरचितस्तोत्रावल्यामलौकिकोद्बलननामाष्टमस्तोत्रे श्रीक्षेमराजकृताविवृतिः ॥

---

ॐ तत्सत् । कदा नवरसार्द्रार्द्र-
सम्भोगास्वादनोत्सुकम् ।
प्रवर्तेत विहायान्यन्-
मम त्वत्स्पर्शने मनः ॥ १ ॥

कदेति । नवरसेन नूतनभक्तिप्रसरेण, आर्द्रार्द्रः सातिशयं स्पृहणीयो यः समावेशात्मा सम्भोगः, तदास्वादे उत्सुकं



सोत्कण्ठं, मम मनः, अन्यत् कल्पनाजालं, विहाय त्वत्स्पर्शने प्रवर्तेत त्वत्समावेशमयं भवेत् ॥ १ ॥

त्वदेकरक्तस्त्वत्पादपूजामात्रमहाधनः ।
कदा साक्षात्करिष्यामि भवन्तमयमुत्सुकः ॥ २ ॥

त्वदिति । त्वय्येवैकत्र न तु विभूतिषु रक्तः, अत एव त्वत्पादपूजामात्रं त्वन्मरीचिसपर्यैव महत् स्फीतं धनं यस्य । "प्रमा समाप्तोत्सव" मितिस्थित्या क्षणमात्रमपि व्युत्थानमसहमानः उत्सुकः सन् कदा त्वां साक्षात्करिष्यामि ॥ २ ॥

गाढानुरागवशतो
निरपेक्षीभूतमानसोऽस्मि कदा ।
पटपटितिविघटिताखिल-
महार्गलस्त्वामुपेष्यामि ॥ ३ ॥

गाढेति । निरपेक्षीभूतमुच्चारकरणध्यानाद्यन्तर्मुखं तत्सर्वं परिहरत् मानसं यस्य स तथाविधः । कदा त्वामुपेष्यामि ऐकध्येन प्राप्स्यामि । कीदृक्—पटपट इति विघटितानि झटिति त्रुटितानि, अखिलानि मायीयान्यर्गलानि अविद्यादिपाशा यस्य । पटपटितीत्याद्युक्त्या अपुनरुत्थानं त्रुटितपाशान्तरसाधर्म्यमुक्तम् ॥ ३ ॥

स्वसंवित्सारहृदयाधिष्ठानाः सर्वदेवताः ।
कदा नाथ वशीकुर्यां भवद्भक्तिप्रभावतः ॥ ४ ॥

स्वसंविदिति । स्वसंवित्सारं प्रकाशविमर्शात्मकं हृदयमधिष्ठानमाश्रयो यासान्ताः, सर्वाः ब्राह्म्यादिकाः देवताः, "याभिःशक्तिचक्रस्य भोग्यतां गत" इति स्थित्या पशवः पाशिताः ।

ताः कदा भवद्भक्तेः समावेशात्मनः प्रभावाद्वशीकुर्यां तच्चक्रैश्वर्यं प्राप्नुयामिति यावत् ॥ ४ ॥

**कदा मे स्याद्विभो भूरि भक्त्याऽऽनन्दरसोत्सवः ।**
**यदाऽऽलोकसुखाऽऽनन्दी पृथङ्नामापि लप्स्यते॥५॥**

कदेति । भूरि प्रभूतः । उत्सवोक्त्या अतिस्पृहणीयत्वात्तदेकव्यग्रमात्मानमाशास्ते । पृथङ्नामेत्यनेन परं सामरस्यं सूचयति ॥ ५ ॥

**ईश्वरमभयमुदारं**
**पूर्णमकारणमपन्हुतात्मानम् ।**
**सहसाऽभिज्ञाय कदा**
**स्वामिजनं लज्जयिष्यामि ॥ ६ ॥**

ईश्वरमिति । अशेषविभूत्यास्पदत्वादीश्वरम् । अप्रतियोगित्वादभयम् । सर्वप्रदत्वादुदारम् । निराकाङ्क्षत्वात्पूर्णम् । नित्यत्वादकारणम् । अथ च अकारणं निर्निमित्तमेव जगद्रूपताग्रहणे स्वरूपगोपनसारत्वादपन्हुतात्मानम् । यो हि अनीश्वरादिरूपः स गोपायतामात्मानं भगवांस्तु नैव । अथ च गोपितात्मैवेति । ईदृशं स्वामिजनं निजप्रभुं, सहसेति शाम्भवावेशयुक्त्या, कदाऽभिज्ञाय साक्षात्कृत्य, लज्जयिष्यामि। अपन्हुतिप्रधानतद्रूपगुणीकारेण पूर्णचिदेकरूपतयैव प्रथयेयमित्यर्थः ॥ ६ ॥

**कदा कामपि तां नाथ तव वल्लभतामियाम् ।**
**यथा मां प्रति न क्वापि युक्तं ते स्यात्पलायितुम्॥७॥**

कदेति । तव वल्लभतामित्युक्त्या इदमाह—मम तावदत्यन्तवल्लभोऽसि, तव तु अहमलौकिकभक्तिप्रकर्षात्कदा कामप्यसामान्यां, प्रसादपात्रतां प्राप्नुयां, यया वल्लभतया मां प्रति सदा आभिमुख्येन तत्र न क्वापि पलायितुं स्वात्मानं गोपायितुं युक्तं स्यात् । सततमेवान्तराविश्य तिष्ठेरित्यर्थः ॥ ७ ॥



**तत्त्वतोऽशेषजन्तूनां भवत्पूजामयात्मनाम् ।**
**दृष्ट्याऽनुमोदितरसाऽऽप्लावितः स्यां कदा विभो ॥८**

तत्वत इति । सर्वे जन्तवः परमार्थतो यत्किञ्चित्कुर्वाणाः स्वात्मदेवताविश्रान्तिसारभवत्पूजामयाः । एतेषां सम्बन्धिन्या तत्वतो दृष्ट्या, त्वदनुग्रहमहिमोक्तेन स्वात्मप्रत्यभिज्ञानेन हेतुना, तैरेवानुमोदितः श्लाघितो यो रसो भक्त्यानन्दप्रसरस्तेन आप्लावितो व्याप्तः कदा स्याम् । तत्त्वत इत्यादृत्या योज्यम् । अथ वा अशेषजन्तूनामिति कर्मणि षष्ठी । ततश्चायमर्थः । कदा अशेषजन्तून् तत्त्वतो भवत्पूजामयान् दृष्ट्वा अनुमोदनरसेन आनन्दप्रसरेणाप्लावितः स्यामिति । अत्रानुमोदित इति भावेक्तः । उभयत्रापि व्याख्याने मत्समः सर्वोऽस्त्वित्याशंसातात्पर्यम् ॥ ८ ॥

**ज्ञानस्य परमा भूमिर्योगस्य परमा दशा ।**
**त्वद्भक्तिर्या विभो कर्हि पूर्णा मे स्यात्तदर्थिता ॥९॥**

ज्ञानस्येति । सर्वशास्त्रेषु ज्ञानं मुक्तिहेतुत्वेनोक्तं, मुक्तेश्च समावेशसतत्वतयैव व्यवस्थापनात्, तद्रूपा या भक्तिः ज्ञानस्य परमा भूः । "योगमेकत्वमिच्छन्ति वस्तुनोऽन्येन वस्तुने" सागमलक्षितस्य विचित्रसमावेशात्मनो योगस्य परचैतन्यभैरवैक्यापत्तिरूपा दशा च या त्वद्भक्तिः, तदर्थिता कदा कर्हि पूर्णा कृतकृत्या स्यात् ॥ ९ ॥

**सहसैवासाद्य कदा गाढमवष्टभ्य हर्षविवशोऽहम्**
**त्वच्चरणवरनिधानं सर्वस्य प्रकटयिष्यामि ॥१०॥**

सहसैवेति । झटिति प्रतिभाविकासेन, आसाद्य आसमन्तात् स्वात्मसम्भोगपात्रीकृत्य, तथा गाढमवष्टभ्य व्युत्थानपरिक्षयार्थं प्रयत्नेनात्मीकृत्य, तत एव हर्षविवशः परमानन्दनिर्भरोऽहं, कदा त्वच्चरणवरनिधानं समस्तसम्पन्मयं भवत्परशक्तिनिधिं, सर्वस्य प्रकटयिष्यामि, छन्नतयान्तःस्थितमपि सूचितोपदेशयुक्त्या उन्मुद्रयिष्यामि । परप्रतिभाबलप्रयत्नावष्टम्भपूर्वमनुग्रहावलोकनादिकं यत्समावेशसंक्रमोपदेशो तत्त्वं, तत्परमसर्वानुग्रहसमर्थ स्यादित्यर्थः । अनेन स्वात्मनः पूर्णत्वाद्विश्वजनानुजिघृक्षापरतां सूचयति ॥ १० ॥

**परितः प्रसरच्छुद्धत्वदालोकमयः कदा ।**
**स्यां यथेश न किञ्चिन्मे मायाच्छायाबिलं भवेत् ॥११**

परित इति । परितः समन्तात् शुद्धोऽद्वयरूपो यस्त्वदालोकश्चित्प्रकाशः तन्मयः कदा स्याम् । यथा मायाछायाबिलमद्वयाख्यातिकुहरं मम न किञ्चिद्भवेत् न किञ्चिच्छिष्येत । छायाशब्देन मायाबिलस्यावास्तवतामाह । मायाछाययाऽऽविलं कलुषं न किंचिदिति वा योज्यम् ॥ ११ ॥

**आत्मसात्कृतनिःशेषमण्डलो निर्व्यपेक्षकः ।**
**कदा भवेयं भगवंस्त्वद्भक्तगणनायकः ॥१२॥**

आत्मेति । आत्मसात्कृतानि चिदैकध्यमापितानि निःशेषाणि सदाशिवादिक्षित्यन्तानि मण्डलानि भुवनानि येन । निर्व्यपेक्षकः अद्वितीयः । त्वद्भक्तगणनायकः प्रधानं कदा स्याम् ॥ १२ ॥



**नाथ लोकाभिमानानामपूर्वं त्वं निबन्धनम् ।**
**महाभिमानः कर्हि स्यां त्वद्भक्तिरसपूरितः ॥१३॥**

नाथेति । “स्रष्टास्मि स्थापयितास्मि संहर्तास्मि तथा पण्डितः शूरो यज्ञवानस्मि” इति नानाविधानां रुद्रक्षेत्रज्ञाभिमानानां त्वमेव चिद्रूपो निबन्धनं कारणम् । अपूर्वं निर्निमित्तं कृत्वा स्वस्वातन्त्र्येणैवेति यावत् । वस्तुतो हि तवैव सर्वकर्तृत्वान्न ब्रह्मादीनां स्रष्टृत्वादि न वा पाण्डित्यादि कस्य चित् । केवलं त्वमेव तत्र तत्र तथाभिमानमुत्थापयसि । यथा चैवं तथा कर्हि कदा त्वदिच्छात एव महाभिमानो विश्वात्मा चिदानन्दघनः शिव एवास्मीति दृढोत्साहावष्टंभो भक्तिरसेन पूरितो व्याप्तः स्याम् । भक्तिरसपूरित इति वदतो ऽयमाशयः यदासादितमहाभिमानस्यापि समावेशास्वादमयः प्रभुविषये दासभाव एवोचितः ॥ १३ ॥

**अशेषविषयाशून्यश्रीसमाश्लेषसुस्थितः ।**
**शयीयमिव शीताङ्घ्रिकुशेशययुगे कदा ॥१४॥**

अशेषेति । शीताङ्घ्रिकमलयुगे प्राग्वत् शयीयं विश्राम्याम् कीदृक्—अशेषविषयाशून्या विश्वनिर्भरा येयं श्रीर्भक्तिलक्ष्मीः तत्कृतेन समाश्लेषेण दृढावष्टम्भेन सुस्थितः । काव्यार्थः स्पष्टः ॥१४॥

**भक्त्यासवसमृद्धायास्त्वत्पूजाभोगसम्पदः ।**
**कदा पारं गमिष्यामि भविष्यामि कदा कृती ॥१५॥**

भक्त्यासवेति भक्त्यासवेन सेवारसेन, समृद्धा स्फीता या त्वत्पूजाभोगसम्पत् समावेशविश्रान्तिश्रीः, तस्याः पारं प्रान्तकोटिं कदा गमिष्यामि, अत एव कदा कृतार्थः स्याम् ॥१५॥

आनन्दवाष्पपूर-
स्खलितपरिभ्रान्तगद्गदाक्रन्दः ।
हासोल्लसितवदन-
स्त्वत्स्पर्शरसं कदाऽऽप्स्यामि ॥ १६ ॥

आनन्देति । चिरव्युत्थानान्तरितां समावेशदशामेवाकाङ्क्षति । आनन्दवाष्पपूरेण अन्तः समावेशहर्षावेशविसरदश्रुसन्ततया, स्खलितः अस्थानप्रतिहतः, परिभ्रान्तश्चिरमनुरणन्, गद्गदः अस्पष्टाक्षरः, आक्रन्दो महानारवो यस्य । हासेन विकासेनोल्लसितं वदनं शक्तिमार्गो यस्य । अत एव हासेनोल्लसितं व्यात्तं शोभितं च वक्त्रं यस्य ॥ १६ ॥

पशुजनसमानवृत्तामवधूय दशामिमां कदा शम्भो ।
आसादयेय तावकभक्तोचितमात्मनो रूपम् ॥ १७ ॥

पश्विति । व्युत्थानपतितभेदमयीमिमामिति स्फुटं भान्तीं दशामवधूय निवार्य, अथच समावेशप्रसरत्सर्वाङ्गावधूननेनाभिभूय, तावकभक्तोचितं नित्योदितपरमानन्दमयमात्मनो, न तु अन्यस्य कस्यचिद्, रूपं स्वरूपं, कदा आस्वादयेय चमत्कुर्याम् ॥ १७ ॥

लब्धाऽणिमादिसिद्धि-
र्विगलितसकलोपतापसन्त्रासः ।
त्वद्भक्तिरसायनपान-
क्रीडानिष्ठः कदाऽऽसीय ॥ १८ ॥

लब्धेति । अणिमादिसिद्धिः प्राग्वदभेदमयी । अत एव विगलितः शान्त उपतापः सन्त्रासश्च यस्य । ब्रह्मादीनान्तु



भेदमयाणिमादियोगेऽपि मरणादित्रासस्यावश्यंभावात् । तथाभूतोऽपि त्वद्भक्त्यमृतपानप्रमोदपरः स्याम् ॥ १८ ॥

नाथ कदा स तथाविध
आक्रन्दो मम समुच्चरेद्वाचि ।
यत्समनन्तरमेव
स्फुरति पुरस्तावकी मूर्तिः ॥ १९ ॥

नाथेति । चिरव्युत्थितस्योक्तिः । स तथाविध इति वक्तुमशक्यः । आक्रन्दो महानादः समुच्चरेत् स्वयमेवोल्लसेत् । स्फुरति समावेशेन दीप्यते मूर्तिः स्वयम् ॥ १९ ॥

गाढगाढभवदङ्घ्रिसरोजा-
लिङ्गनव्यसनतत्परचेताः ।
वस्त्ववस्त्विदमयत्नत एव
त्वां कदा समवलोकयितास्मि ॥ २० ॥

गाढेति । वीप्सया व्यसनतत्परशब्दाभ्यां च भक्तिप्रकर्षवैवश्यमाह । वस्त्ववस्त्विदमिति भावाभावरूपं विश्वम्, अयत्नत एव ध्यानजपादि विना, त्वामपि त्वद्रूपं सम्यक् तत्त्वतोऽवलोकयितास्मि द्रक्ष्यामि इति शिवम् ॥ २० ॥

इति श्रीमदुत्पलदेवाचार्यविरचितस्तोत्रावलौ स्वातन्त्र्यविजयनामधेये नवमे स्तोत्रे श्रीक्षेमराजकृता विवृतिः ॥ ९ ॥

ॐ न सोढव्यमवश्यं ते जगदेकप्रभोरिदम् ।
माहेश्वराश्च लोकानामितरेषां समाश्रयत् ॥ १ ॥

नेति । माहेश्वराः विश्वेश्वरस्वरूपसमाविष्टाः, इतरेषां भेद-

मयानां ब्रह्मादीनां समा इति इदं ते तव न सोढव्यं त्वयैवैतन्न सह्यते स्वभावसिद्धमेवैतत् । यतस्त्वमेवैकः अद्वितीयो जगतः प्रभुः । चकारौ विरोधहेतुमाहतुः । इतरेषां लोकानां समा इति तव न सोढुं युक्तमित्यन्ये ॥ १ ॥

ये सदैवानुरागेण भवत्पादानुगामिनः ।
यत्र तत्र गता भोगांस्ते कांश्चिदुपभुञ्जते ॥ २ ॥

य इति। अनुरागेण आसक्त्या, ये त्वन्मरीचिसंबद्धास्ते यत्र तत्रेति सर्वावस्थास्थिताः कांश्चित्परानन्दमयान्भोगानुपभुञ्जते॥२

भर्ता कालान्तको यत्र भवांस्तत्र कुतो रुजः ।
तत्र चेतरभोगाशा का लक्ष्मीर्यत्र तावकी ॥ ३ ॥

भर्तेति । कालान्तक इत्यनेन महाकालसञ्चार्यमाणाः सर्वा रुजः कालग्रासिनि प्रभौ सति कुतः। मूलोच्छेदान्नैव भवन्तीत्यर्थः । इतरभोगाशा सदाशिवादिपदलक्ष्मीस्पृहा न का चित् यत्र, भेदस्य ग्रस्तत्वात्। लक्ष्मीरद्वयप्रकाशसम्पत् ॥ ३ ॥

क्षणमात्रसुखेनापि विभुर्येनापि लभ्यसे ।
तदैव सर्वः कालोऽस्य त्वदानन्देन पूर्यते ॥ ४ ॥

क्षणमात्रेति । येन भक्तेन क्षणमात्रेण समावेशस्पन्देन हेतुना ऽपि त्वं लभ्यसे, अस्य भक्तस्य त्वया तदैवावसरे सर्वः कालो व्युत्थानदशाभाव्यपि आनन्देन पूर्यते । अकालकलित चिदानन्दस्वरूपानुप्रवेशेन तन्मयीक्रियते । उत्तरकालश्च तत्संस्कारेणाप्लाव्यते । विभुः स्वामी व्यापकश्च ॥ ४ ॥

आनन्दरसबिन्दुस्ते चन्द्रमा गलितो भुवि ।
सूर्यस्तथा ते प्रसृतः संहारी तेजसः कणः ॥ ५ ॥



बलिं यामस्तृतीयाय नेत्रायास्मै तव वि(प्र)भो ।
अलौकिकस्य कस्यापि माहात्म्यस्यैकलक्ष्मणे ॥ ६ ॥

आनन्देति । ते तव, भुवि अग्नीषोमात्मकमध्यशक्तिमार्गे, आनन्दरसबिन्दुर्यः स एवाह्लादकारित्वाच्चन्द्रमाः । गलितो द्रुतस्वभावः (बिन्दुश्चन्द्रमाश्च गलितः । मनः प्रमेयराशिसहितं तत्रैव विलीनं । तथा तत्रैव संहारी भेदग्रासी, तेजसः कणः परमाग्निस्फुलिङ्गो यः स एव प्रकाशकत्वतमोपहत्वादेः सूर्यः प्रसृतः । सूर्यश्च प्राणे विलीनः। द्रावितसोमसूर्याहि परा शक्तिभूमिः । अस्मै शक्तिरूपाय नेत्राय बलिं यामः । अपि च भुवि यश्चन्द्रमाः स त्वदीय आनन्दबिन्दुः गलितः स्रुतः, सूर्यश्च तव सम्बन्धिनः तेजसः कणः प्रसृतः स्फुरितः । यथागमः "ज्ञानशक्तिः प्रभोरेषा तपत्यादित्यविग्रहा । तपते चन्द्ररूपेण क्रियाशक्तिः परस्य सा" इति । अस्मै एतदर्थं सूर्यचन्द्रोल्लासनाय तव तृतीयं नेत्रं तस्मै बलिं यामः । अत्रैव महावन्हिमये मायीयदेहादिप्रमातृतां समर्पयामः। कीदृशाय कस्याप्यसामान्यस्य ब्रह्मोपेन्द्राद्यगोचरस्य अलौकिकस्य माहात्म्यस्यैकलक्ष्मणे असाधारणाभिज्ञानाय । अस्मै इति तादर्थ्ये चतुर्थी ॥ ५ । ६ ॥

तेनैव दृष्टोऽसि भवद्दर्शनाद्योऽतिहृष्यति ।
कथं चिद्यस्य वा हर्षः कोऽपि तेन त्वमीक्षितः ॥ ७ ॥

तेनेति । "उच्चाररहितं वस्तु चेतसैव व्यचिन्तयन्" इति शाक्तसमावेशयुक्त्या भवन्तं दृष्ट्वा यो ऽतिहृष्यति आनन्दमयो भवति, तेनैव क्वापि अभेदोपासनापरेणासि त्वं दृष्टः । कथं चिदिति अकिञ्चिच्चिन्तकस्येति शाम्भवसमावेशक्रमेण वा यस्य कोऽपि हर्षो न तु भेदोपासापरेण हर्षः । तेन कोऽपि इति चिद्घनस्त्वमीक्षितः प्रत्यभिज्ञातः ॥ ७ ॥

येषां प्रसन्नो ऽसि प्रभो यैर्लब्धं हृदयं तव ।
आकृष्य त्वत्पुरात्तैस्तु बाह्यमाभ्यन्तरीकृतम् ॥ ८ ॥

येषामिति । प्रसन्नोऽसीति प्राग्वत् । अत एव हृदयं प्रकाशविमर्शात्मकं रूपं लब्धमात्मीकृतं यैस्तैस्त्वत्पुरात्त्वदीयात्पूरकाच्चिद्रूपादाकृष्य विस्फार्य, देहाद्यपेक्षया बाह्यं विश्वमिदं पुनराभ्यन्तरीकृतं चिन्मयीकृतं "सृष्टिं तु सम्पुटीकृत्य" इति श्रीत्रिंशकोक्ततत्वार्थदृशा संविद उदितं संविदभेदेन चाभासमानं विश्वं चिन्मयमेवैषामिति यावत् । अनुरणनशक्त्या लौकिकेश्वरार्थः प्राग्वत् ॥ ८ ॥

त्वद्दृते निखिलं विश्वं समदृग्यातमीक्ष्यताम् ।
ईश्वरः पुनरेतस्य त्वमेको विषमेक्षणः ॥ ९ ॥

त्वद्दृते इति । समदृगिति समा तुल्या भेदमयी दृक् संवित्तिर्यस्य तव द्विनयनं चेक्ष्यतां प्रमेयतां यातं । एक इत्यद्वितीयः । विषमं भेदप्रोषकमीक्षणं ज्ञानं यस्य त्रिनेत्रश्च ॥ ९ ॥

आस्तां भवत्प्रभावेण विना सत्तैव नास्ति यत् ।
त्वद्दूषणकथा येषां त्वद्दृते नोपपद्यते ॥ १० ॥

आस्तामिति । येषां बौद्धसांख्यमीमांसकादीनां, त्वद्दूषणकथा दूषयित्रात्मकप्रस्फुरच्चिद्रूपं त्वत्स्वरूपं विना नोपपद्यते तेषां विचित्रतनुकरणप्रज्ञानां बुद्धिमत्प्रभावं विना सत्तैव नास्तीत्यादि युक्तिवृन्दं पतितपार्ष्ण्याघातकल्पमास्ताम् ॥ १० ॥

बाह्यान्तरान्तरायालीकेवले चेतसि स्थितिः ।
त्वयि चेत्स्यान्मम विभो किमन्यदुपयुज्यते ॥ ११ ॥

बाह्येति । बाह्याः शरीरप्रमातृतापेक्षतत्तद्वस्तुसंयोगवियो-



गादयः, आन्तरा बुद्ध्याद्यपेक्षका मनःकल्पनादयः, ये अन्तरायाः स्वविश्रान्त्युपरोधिनः, तेषामाली पङ्क्तिस्तया केवले रहिते, त्वद्विषये चेतसि यदि मम स्थितिः समावेशैकाग्रता स्यात्, तत्किमन्यदुपयुज्यते, प्राप्तव्यस्यैव प्राप्तत्वात् ॥ ११ ॥

अन्ये भ्रमन्ति भगवन्नात्मन्येवातिदुःस्थिताः ।
अन्ये भ्रमन्ति भगवन्नात्मन्येवातिसुस्थिताः ॥ १२ ॥

अन्य इति । नैरात्म्यजडात्मवादिनः संसारिणश्च, आत्मनि निज एव स्वरूपे, भ्रमन्ति विपर्यस्यन्ति जन्ममरणादिपरम्परामपर्यन्तां भजन्ते । अतिदुःस्थितास्तत्त्वज्ञत्वाभावात्क्लिश्यन्ते । अन्ये इति केचिदेवापश्चिमा आत्मन्येव चिद्रूपे, न तु परत्र क्वचिदपि, अतिसुस्थिताः परमानन्दैकघनाः सन्तो, भ्रमन्ति विहरन्ति ॥ १२ ॥

अपीत्वाऽपि भवद्भक्ति-
सुधामनवलोक्य च ।
त्वामीश त्वत्समाचारमात्रात्
सिद्ध्यन्ति जन्तवः ॥ १३ ॥

अपीत्वेति । त्वद्भक्तिसुधां शाक्तसमावेशानन्दरसमपीत्वाऽपि अचमत्कृत्याऽपि, अनवलोक्य च त्वामिति चित्स्वरूपं त्वां मनागप्यप्रत्यभिज्ञाय, जन्तवो जन्मादिभाजोऽपि त्वत्समाचारमात्रादिति तत्तदाम्नायचर्यापादोक्तात्सिद्ध्यन्ति परसिद्धिभाजो भवन्ति । अपिशब्देन मात्रशब्देन च विस्मयो ध्वन्यते । तथाह्यागमे "कदाचिद्भक्तियोगेन चर्यये"त्युपक्रम्य "संसारिणोऽनुगृह्णाति विश्वस्य जगतः पति"रित्यन्तम् अस्मद्गुरुभिरपि तन्त्रसारेऽभिहितं "परमेसरु सच्छन्दु बहुकोणवि अ अप्पाइइच्छ चरिआसि तु णणिजजपाहुं कि अभवणो अइअच्छेति" ॥ १३ ॥

भृत्या वयं तव विभो तेन त्रिजगतां यथा ।
बिभर्ष्यात्मानमेवं ते भर्त्तव्या वयमप्यलम् ॥१४॥

भृत्या इति। त्रिजगतामिति। प्राग्वत्। बिभर्षीति धारयसि पोषयसि च। आत्मानं स्वं रूपं। वयमप्यलमित्यत्रायमाशयः-यथा त्वया विश्वमन्तरभेदेन बिभ्रताऽपि देहाद्यभिमानग्रहणेन वस्तुतस्त्वन्मया अपि वयं व्यतिरेकोचिताइव, यत् न भिन्नमेव विश्वं जानीमः, ततो ऽलमत्यर्थं ते वयं धारणीयाः पोषणीयाश्च, यतो भृत्याः स्मः ॥ १४ ॥

परानन्दामृतमये दृष्टे ऽपि जगदात्मनि ।
त्वयि स्पर्शरसे ऽत्यन्ततरमुत्कण्ठितो ऽस्मि ते ॥१५॥

परेति। त्वयि परमानन्दसारे नीलपीतादिरूपेण जगदात्मनि दृष्टेऽपि, व्युत्थाने तन्मुखेन प्रत्यभिज्ञाते ऽपि, स्पर्शरसे गाढसमावेशस्पर्शप्रसरे, ते तव भृशमुत्कण्ठितो ऽस्मि ॥ १५ ॥

देव दुःखान्यशेषाणि यानि संसारिणामपि ।
धृत्याख्यभवदीयात्मयुतान्यायान्ति सह्यताम् ॥१६॥

देवेति। हे देव क्रीडादिस्वभाव, अशेषाणि क्रीटब्रह्मादिविस्पन्दितानि तावद्दुःखानि भेदमयत्वात्, तान्यपि संसरणपराणां प्रमातॄणां सोढव्यतां यान्ति। यतो धृत्याख्येन "इदमद्य मया लब्धमिदं प्राप्स्ये मनोरथम्" इत्याद्यभिमानावष्टम्भग्राहिणा त्वदीयेनात्मना युक्तानि संपृक्तान्येतानि ॥ १६ ॥

सर्वज्ञे सर्वशक्तौ च त्वय्येव सति चिन्मये ।
सर्वथाप्यसतो नाथ युक्ता ऽस्य जगतः प्रथा॥१७॥

सर्वज्ञ इति। अस्य जगतो विश्वस्य सर्वथा ऽपि देशकाला



कारार्थक्रियाकारित्वादिना स्वरूपेण प्रकाशबाह्यस्यानुपदृश्यमानत्वादविद्यमानस्य, त्वयि चिन्मये सर्वशक्तौ स्वतन्त्रे सर्वावभासके च सति, सर्वथाऽपि प्रथा युक्ता। सर्वथेत्युभयत्र योज्यम् ॥ १७ ॥

त्वत्प्राणिताः स्फुरन्तीमे गुणा लोष्टोपमा अपि ।
नृत्यन्ति पवनोद्धूताः कार्पासपिचवो यथा॥१८॥
यदि नाथ गुणेष्वात्माभिमानो न भवेत्ततः ।
केन हीयेत जगतस्त्वदेकात्मतया प्रथा ॥ १९ ॥

त्वत्प्राणिता इति। गुणाः बुद्ध्यादिपरिस्पन्दाः लोष्टोपमा अपि जडाः त्वत्प्राणिताः त्वज्जीविताः सन्तः स्फुरन्ति। अन्यथा न कथञ्चित्काः स्युः। अत्र दृष्टान्तः। यथा कार्पासानां पिचवः लेशाः पवनेन वायुनोच्चैर्धूताः सन्तो नृत्यन्ति नभसि विलसन्ति। एवं च हे नाथ यदि भक्तेषु गुणेषु त्वन्मयः शक्तिदत्त आत्माभिमानो न भवेत्ततोऽस्य जगतः त्वदेकात्मतया त्वदभेदेन या प्रथा सा केन हेतुना हीयते, न केन चिन्निवार्यते। भक्तानां विश्वस्य त्वदैक्येन स्फुरणात्। "गुणादिस्पन्दनिष्पन्दाः स्युर्ज्ञस्य परिपक्तिनः" इत्युक्तम् ॥ १८ ॥ १९ ॥

वन्द्यास्ते ऽपि महीयांसः प्रलयोपगता अपि ।
त्वत्कोपपावकस्पर्शपूता ये परमेश्वर ॥ २० ॥

वन्द्या इति। तेऽपीति कालकामत्रिपुरान्धकाद्याः। न केवलं साक्षादनुगृहीताः भक्तिमन्त इत्यपिशब्दार्थः। महीयांस इत्यलौकिकमाहात्म्ययुक्ताः, प्रलयं विनाशमुपगता अपि ये तव श्रीकण्ठाद्यवतारवपुषः सम्बन्धिना निग्रहद्वारकानुग्रहात्मना क्रीडाकोपाग्निस्पर्शेन पवित्रिताः ॥ २० ॥

महाप्रकाशवपुषि विस्पष्टे भवति स्थिते ।
सर्वतोऽपीश तत्कस्मात्तमसि प्रसराम्यहम् ॥२१॥

महाप्रकाशेति । व्युत्थानवैवश्यात्साक्षात्कारभूमिमलभमानस्योक्तिरियम् । यतः कानिचिदत्र समावेशोत्कर्षशंसीनि, अन्यानि व्युत्थानप्रहाणाकांक्षापराणि । अपराणि सार्वात्म्यप्रथाप्रथयितॄणि । पराणि निःशेषभेदोपशममयशिवताशंसापराण्यस्य सूक्तानि । तानि च यथायोगं संयोजितानि नियोजयिष्यन्ते च इति नास्य सत्परमेष्ठिन ईदृगुक्तिषु पूर्णता मन्तव्या । विस्पष्टेपीति विश्वप्रकाशमये । तमसि प्रसरामीतिव्युत्थानविवशो भवामीति ॥ २१ ॥

अविभागो भवानेव स्वरूपममृतं मम ।
तथाऽपि मर्त्यधर्माणामहमेवैकमास्पदम् ॥ २२ ॥

अविभाग इति । इयमप्युक्तवदेवोक्तिः । भवानेवेति न तु अन्यत्किञ्चिदमृतमानन्दघनं । मर्त्यधर्माणां हानादानादिप्रयासानां । अहमिति व्युत्थाने देहाद्यभिमानमयः, न तु चिद्रूप एक एवेति प्राग्वत् ॥ २२ ॥

महेश्वरेति यस्यास्ति नामाङ्कं वाग्विभूषणम् ।
प्रणामाङ्कश्च शिरसि स एवैकः प्रभावितः ॥२३॥

महेश्वरेति । नामाङ्कं यद्वन्दिनः पठन्ति तव महेश्वर ब्रह्मादिविश्वेश्वर प्रभो इति यस्य च वाचो विभूषणमस्ति, तथा शिरसि प्रणामाङ्कः परस्वभावप्रह्वताभिज्ञानं च यस्यास्ति स एवैकः अद्वितीयः, प्रभौ महेश्वरे, इतः सम्बद्धः । अथ वा अयं प्रणामाङ्कितः समाविष्टो भक्तिशाली भगवदभेदस्पर्शप्राप्तेः नामाङ्कत्वात्प्रभावितः प्रख्यातः ॥ २३ ॥



सदसच्च भवानेव येन तेनाप्रयासतः ।
स्वरसेनैव भगवंस्तथा सिद्धिः कथं न मे ॥२४॥

सदसदिति । भावाभावरूपं विश्वं त्वमेव यतः ततो मम अप्रयासत उपायजालं विना स्वरसेनैव नित्योदितत्वेन कथं तथा न सिद्धिस्त्वत्साक्षात्कारः सदोदितो न कस्मादस्ति ॥२४॥

शिवदासः शिवैकात्मा किं यन्नासादयेत्सुखम् ।
तर्प्योऽस्मि देवमुख्यानामपि येनामृतासवैः ॥२५॥

शिवदास इति । यत एव शिवदासः तत एव समाविष्टत्वाच्छिवैकात्मा किं यत्सुखं नासादयेत् परमानन्दमयो भवेदेवेत्यर्थः । यतो देवमुख्यानामन्यैस्तर्पणीयानामपि ब्रह्मादीनां हृदयादिस्थानस्थितानामिन्द्रियदेवतानां च अमृतासवैः प्रमेयप्रथासमयस्फूर्जदद्वयप्रकाशानन्दप्रसरैः, तर्प्यः परिपूरणीयोऽस्मि न तु पशुवद्भोग्यः ॥ २५ ॥

हृन्नाभ्योरन्तरालस्थः प्राणिनां पित्तविग्रहः ।
ग्रससि त्वं महावह्निः सर्वं स्थावरजङ्गमम् ॥२६॥

हृन्नाभ्योरिति । हृन्नाभ्योरन्तराले घटस्थाने स्थितः प्राणिनां सर्वेषां पित्तविग्रहः पित्तरूपः उष्णान्नाद्याहरणाद्वाह्यस्तेजसोऽपि ग्रसनान्महावह्निस्त्वमत एव स्थावरजङ्गममश्नासि त्वम् अनेन सर्वत्र प्रमातृजठरादिस्थानेन विश्वभक्ष एव परमेश्वरः परमार्थसन्निति शिवम् ॥ २६ ॥

इति श्रीमदुत्पलदेवाचार्यविरचितस्तोत्रावलौ अविच्छेदभङ्गाख्ये दशमे स्तोत्रे श्रीक्षेमराजाचार्यविरचिता विवृतिः ॥ १० ॥

ॐ जगदिदमथ वा सुहृदो
बन्धुजनो वा भवति न मे किमपि ।
त्वं पुनरेतत्सर्वं
यदा तदा कोऽपरो मेऽस्तु ॥ १ ॥

ॐ जगदिदमिति।ॐ जगदादित्रयं लोकक्रमेणान्तरङ्गमपि मम न किंचित् तद्विलक्षणचिन्मात्रैकरूपत्वात्, यदा पुनः प्रकाशमयत्वादेतत्सर्वं त्वमेव तदा मम अपरः व्यतिरिक्तः कोऽस्तु, न किञ्चित्, जगदपि स्वरूपमेवेति यावत् ॥ १ ॥

स्वामिन्महेश्वरस्त्वं साक्षात्सर्वं जगत्वमेवेति ।
वस्त्वेव सिद्धिमेत्विति याच्ञा तत्रापि याच्ञैव ॥२॥

स्वामिन्निति। महेश्वर इति प्राग्वत्, साक्षादिति अद्वयदृष्ट्या चाधिष्ठानेन इति, वस्त्वेव पारमार्थिकमेवैतत्, तत्रापि एवमेव स्थितेऽपि, एतत्सिद्धिमेत्विति या याच्ञा सा याच्ञैव त्वमेव प्रकटीभूया इत्यनेनैव लज्ज्यते इति स्थिता न युक्तैवेत्यर्थः, "होन्ति कमलाइ कमलाइ" इति न्यायेन द्वितीयो याच्ञाशब्दः अचारुत्वनिष्प्रयोजनत्वादिमात्रताध्वननपुरःसरः ॥ २ ॥

त्रिभुवनाधिपतित्वमपीह य-
त्तृणमिव प्रतिभाति भवज्जुषः ।
किमिव तस्य फलं शुभकर्मणो
भवति नाथ भवत्स्मरणादृते ॥ ३ ॥

त्रिभुवनाधिपतित्वमिति । भवज्जुषः समावेशयुक्तान् इति प्रतियोगे शस्, इहेति अस्मिन्नेव समये, त्रिभुवनाधिपतित्वं भूर्भु-



वस्स्वस्स्वामित्वमपि तृणमिव प्रतिभाति तस्य, तथा प्रतिभानलक्षणस्य शुभकर्मणो भवत्स्मरणादृते भवत्स्मरणं विना, किं फलं, न किञ्चिदन्यत् व्यतिरिक्तमस्तीति यावत् प्राप्तव्यस्यैव प्राप्तत्वात् ॥ ३ ॥

येन नैव भवतोऽस्ति विभिन्नं
किञ्चनापि जगतां प्रभवश्च ।
त्वद्विजृम्भितमतोऽद्भुतकर्म-
स्वप्युदेति न तव स्तुतिबन्धः ॥ ४ ॥

येनेति । त्वत्तो भिन्नं किञ्चनापि नास्ति सर्वस्य प्रकाशरूपत्वात्, जगतां प्रभवः अपि ब्रह्माद्याः तवैव जृम्भा येन हेतुनाऽतः अद्भुतेषु विश्वसर्गसंहारादिष्वपि कर्मसु तव न स्तुतिबन्धः स्तोत्रादिभेदाभावात्, त्वमेव स्तुत्यस्तोत्रस्तुतिरूपतया भासीत्ययमत्र तत्वार्थः ॥ ४ ॥

त्वन्मयोऽस्मि भवदर्चननिष्ठः
सर्वदाहमिति चाप्यविरामम् ।
भावयन्नपि विभो स्वरसेन
स्वप्नगोऽपि न तथा किमिव स्याम् ॥ ५ ॥

त्वन्मय इति । त्वमेव प्रकृतं रूपं यस्य तथा भूतोऽस्मि, त्वय्येव चिन्मये विश्वार्पणक्रमेणाहं सर्वदा अर्चननिष्ठ इत्यविरामं कृत्वा भावयन्नपि व्युत्थानेऽनुसन्दधदपि स्वप्नगोऽपि, स्वरसेनैव स्वेच्छावशेनैव, किमिति न तथैव भवामि, कस्मात्स्वप्नेऽपि संस्कारप्रबोधसारेऽपि जागरवत्त्वदर्चापरो न भवामि न समावेशामि इति यावत् ॥ ५ ॥

ये मनागपि भवच्चरणाब्जो-
द्भूतसौरभलवेन विमृष्टाः ।
तेषु विस्तमिव भाति समस्तं
भोगजातममरैरपि मृग्यम् ॥ ६ ॥

य इति । चरणाब्जं प्राग्वत्, सौरभम् अवस्थास्नुरामोदसंस्कारस्तस्य लवो लेशमात्रं, न तु पूर्णं रूपं, तेन ये विमृष्टाः मनाङ्मात्रेण पात्रीकृतास्तेषु समस्तं सदाशिवान्तभोगजातं देवैरप्रार्थनीयं विस्तं दुरामोदमिव प्रतिभाति । एवं च पूर्णसमावेशशालिनां दण्डापूपिकयैव दूरोत्सारितः सिद्ध्यभिलाषः ॥ ६ ॥

हृदि ते न तु विद्यतेऽन्यदन्य-
द्वचने कर्मणि चान्यदेव शम्भो ।
परमार्थसतोऽप्यनुग्रहो वा
यदि वा निग्रह एक एव कार्यः ॥ ७ ॥

हृदीति । चिदद्वयप्रथारूपो महादेवः यत्र प्रथितुं प्रवृत्तः तत्र हृदयानुष्ठानपर्यन्तं प्रथते, यत्र तु गूहितात्मा तत्र हृदि वचसि च कर्मणि च गूहितात्मैव यतः परमार्थे न सतः साधोः सात्त्विकस्य वस्तुतः निग्रहानुग्रहयोर्मध्यादेकमेव कर्तव्यं भवति न तु शबलचेष्टितत्वमिति अर्थान्तरन्याससम्भेदः, प्रकृतेऽर्थे निग्रहानुग्रहौ स्वरूपनिमीलनोन्मीलने अप्रकृतेऽप्यपकारोपकाराविति श्लेषच्छायाऽपि ॥ ७ ॥

+मूढोऽस्मि दुःखकलितोऽस्मि जरादिदोष-
भीतोऽस्मि शक्तिरहितोऽस्मि तवाश्रितोऽस्मि ।



शम्भो तथा कलय शीघ्रमुपैमि येन
सर्वोत्तमां धुरमपोज्झितदुःखमार्गः ॥ ८ ॥

मूढोऽस्मीति । व्युत्थानापेक्षयोक्तमित्युक्तप्रायं, तवाश्रितोऽस्मीत्यत्र भङ्गं कृत्वा उत्तरार्धं योज्यं, कलय सम्पादय, सर्वोत्तमां सम्पूर्णसमावेशमयीम् ॥ ८ ॥

त्वत्कर्णदेशमधिशय्य महार्घभाव-
माक्रन्दितानि मम तुच्छतराणि यान्ति ।
वंशान्तरालपतितानि जलैकदेश-
खण्डानि मौक्तिकमणित्वमिवोद्वहन्ति ॥ ९ ॥

त्वदिति । अधिशय्य प्राप्य, महार्घभावमनर्घत्वम्, तुच्छतराणीति अनौद्धत्यं ध्वनति, यान्तीति तु अतिभक्तित्वेन निश्चितप्रतिपत्तित्वात्, वंशान्तरे इत्यर्थान्तरन्यासः स्पष्टः ॥ ९ ॥

किमिव न लभ्यते बत न तैरपि नाथ जनैः
क्षणमपि कैतवादपि च ये तव नाम्नि रताः ।
शिशिरमयूखशेखर तथा कुरु येन मम
क्षतमरणोऽणिमादिकमुपैमि यथा विभवम् ॥ १० ॥

किमिति । कैतवाद्व्याजादपि ये जनास्तव नाम्नि न तु तात्त्विके स्वरूपे रतास्तैरपि किं न लभ्यते, पूजासत्काराद्यभीष्टमपरिज्ञाततदाशयेभ्यः सकाशात्प्राप्यत एव, ये तु परमार्थतः सततं च त्वयि रताः ते अर्थादेव परमार्थमया एवातो हे शिशिरमयूखशेखर सर्वसन्तापहारिन् तथा कुरु यथा प्राग्व्याख्यातरूपाणिमादिकं विभवमुपैमि, क्षतमरणः अकालकलितः, अस्य

पदस्यायमाशयः यद्ब्रह्मादयः अणिमादिविभूतियुक्ता अपि मृतिधर्माण एव यथोक्तमस्मद्गुरुभिः क्रमकेलौ "श्रीमत्सदाशिवपदेऽपि गतोग्रकाली, भीमोत्कटभ्रुकुटिरेष्यति भङ्गभूमिः" इति अतो मां क्षतमरणं चिदानन्दघनमद्वयाणिमादिपात्रं कुरु। ये तु विभूतिस्पृहणीयत्वेनैतद्व्याकुर्वते तेषां स्मरसि नाथ कदाचिदपीहितमिति सत्येन भगवन्निति विस्रमिव भाति समस्तभोगजातमित्यादि च व्याहतमेव ॥ १० ॥

शम्भो शर्व शशाङ्कशेखर शिव त्र्यक्षाक्षमालाधर
श्रीमन्नुग्रकपाललाञ्छन लसद्भीमत्रिशूलायुध ।
कारुण्याम्बुनिधे त्रिलोकरचनाशीलोग्र शक्त्यात्मक
श्रीकण्ठाशु विनाशयाशुभभरानाधत्स्व सिद्धिं पराम्११

शम्भो इति । उग्राणि भीषणानि अशेषब्रह्मादिसम्बन्धीनि कपालानि लाञ्छनं यस्य, अशुभभरान् भेदोल्लासान्, परां परमाद्वयानन्दरूपाम् ॥ ११ ॥

तत्किं नाथ भवेन्न यत्र भगवान्निर्मातृतामश्नुते
भावः स्यात्किमु तस्य चेतनवतो नाशास्ति यं शङ्करः।
इत्थं ते परमेश्वराक्षतमहाशक्तेः सदा संश्रितः
संसारेऽत्र निरन्तराधिविधुरः क्लिश्याम्यहं केवलम्१२

तत्किमिति । तत्वभूतभावो भुवनादिभावः सत्ता चेतनवतः सकलादेर्मन्त्रमहेश्वरान्तस्य आशास्तीति प्रवृत्तिर्भूतानामैश्वरीति स्थित्या सर्वप्रमातृनियामकरूपं शासितृत्वं भगवत एव सदेति । न तु कदाचित् निरन्तराधिविधुरत्वं व्युत्थाने समावेशानासादनात् अहं केवलम् इत्यत्रायमभिप्रायः मायीयेऽयं



देहादिप्रमातृता चेद्गलिता तत्सर्वमिदं त्वन्मयमेवोच्यते देहाद्यहन्तैवोन्मूलनीया वर्तते ॥ १२ ॥

यद्यप्यत्र वरप्रदोद्धततमाः पीडाजरामृत्यवः
एते वा क्षणमासतां बहुमतः शब्दादिरेवास्थिरः ।
तत्रापि स्पृहयामि सन्ततसुखाकाङ्क्षी चिरं स्थास्नवे
भोगास्वादयुतत्वदङ्घ्रिकमलध्यानाग्र्यजीवातवे ॥१३॥

यद्यप्येति । अत्रेति संसारे, उद्धततमा असह्याः, क्षणमासतां साम्प्रतं तिष्ठन्त्विति लौकिक्युक्तिः, बहुमतो विश्वस्याभिलषितः, सन्ततमद्वयानन्दरूपं सुखमाकाङ्क्षतीति तच्छीलः, चिरस्थास्नवे चिरमवस्थानशीलाय, जीवातवे जीविताय, स्पृहयामि, कीदृशाय, भोगास्वादयुतत्वदङ्घ्रिकमलध्यानाग्र्याय परमानन्दचमत्कारयुक्तत्वन्मरीचिपद्मचिन्तनप्रधानाय, अत एव स्पृहणीयत्वम् ॥ १३ ॥

हे नाथ प्रणतार्तिनाशनपटो श्रेयोनिधे धूर्जटे
दुःखैकायतनस्य जन्ममरणात्रस्तस्य मे सांप्रतम् ।
तच्चेष्टस्व यथा मनोज्ञविषयास्वादप्रदा उत्तमाः
जीवन्नेव समश्नुवेऽहमचलाः सिद्धीस्त्वदर्चापरः॥१४॥

हे नाथेति । मनोज्ञं चिदानन्दसुन्दरं विषयाणां रूपादीनां चमत्कारास्वादं ददति यास्ता, उत्तमा, अचलाः, सिद्धीरिति, प्राग्वत् जीवन्नेवेति न देहपाते अपि तु जीवदवस्थायामेव, समाविष्ट एवाहं त्वदर्चापर इति त्वयि चिदात्मनि विश्वार्पणपरः ॥ १४ ॥

नमो मोहमहाध्वान्तध्वंसनानन्यकर्मणे ।
सर्वप्रकाशातिशयप्रकाशायेन्दुलक्ष्मणे ॥१५॥

नमो मोहेति । महामोहध्वान्तस्य मायातमसः ध्वंसने अनन्यकर्मा सदोद्युक्तः, सर्वान् अग्नीषोमसूर्यप्रकाशानतिशेते यस्तथाभूतः प्रकाशो यस्य तस्मै ध्वान्तध्वंसे प्रकाशनव्यापारे, चानुगुणमभिधानमिन्दुलक्ष्मणे इति शिवम् ॥ १८ ॥

इति श्रीमदुत्पलदेवाचार्यविरचितस्तोत्रावलौ औत्सुक्यविश्वसितनामन्ये-
कादशस्तोत्रे विपश्चिद्वरश्रीक्षेमराजविरचिता विवृतिः ॥ ११ ॥

---



ॐ सहकारि न किञ्चिदिष्यते
भवतो न प्रतिबन्धकं दृशि ।
भवतैव हि सर्वमाप्लुतं
कथमद्यापि तथापि नेक्षसे ॥ १ ॥

ॐ सहकारीति । भवतो दृशि स्वप्रकाशने मलपरिपाकादिकं सहकारि न किञ्चित् नापि प्रतिबन्धकं किञ्चिदस्ति यस्मात्सहकार्याद्यभिमतं त्वयैव व्याप्तं तथाऽपि कथमद्यापीति इयति व्युत्थाने नेक्षसे न प्रकाशसे ऽस्माकमित्यर्थः, भवत इति कर्मणि षष्ठी ॥ १ ॥

अपि भावगणादपीन्द्रिय-
प्रथमादप्यवबोधमध्यतः ।
प्रभवन्तमपि स्वतः सदा
परिपश्येयमपोढविश्वकम् ॥ २ ॥

अपीति । भावेभ्यः इन्द्रियेभ्यः ज्ञानेभ्य आत्मनश्च सकाशात्त्वामेव प्रभुं नित्यं परितः समन्तात्पश्येयं कथम् अपोढविश्वकं तिरस्कृताशेषभेदम् कृत्वा ॥ २ ॥

कथन्ते जायेरन्कथमपि च ते दर्शनपथं
व्रजेयुः केनापि प्रकृतिमहता केन खचिताः ।
तथोत्थायोत्थाय स्थलजलतृणादेरखिलतः
पदार्थाद्यान्दृष्टिस्त्रवदमृतपूरैर्विकिरसि ॥ ३ ॥

कथमिति । अखिलतः पदार्थात् उत्थायोत्थायेति वीप्सा, तथेत्यलौकिकेन प्रकारेणोत्थायोत्थायेति, तत्तद्वेद्यदशायां भेदं

निमज्ज्य चिद्रूपतया स्फुरित्वा यान् ज्ञानात्मकप्रसरदमृतोत्करैः आच्छुरयसि, ते केनापि प्रकृतिमहता इति निस्यविकसितरोमाञ्चितत्वादिना प्रकाशेन चिह्नेन प्रकाशिताः न जन्मभाजो नापि लोकैः लक्ष्यन्ते कथमित्यसंभावनायाम् ॥ ३ ॥

साक्षात्कृतभवद्रूपप्रसृतामृततर्पिताः ।
उन्मूलिततृषो मत्ता विचरन्ति यथारुचि ॥ ४ ॥

साक्षादिति । अमृतमानन्दः, उन्मूलिततृषो अपुनरुत्थानेन शमिता तृट् विभूत्यादिस्पृहा यैः, मत्ता हृष्टाः स्वातन्त्र्येण विहरन्ति, अन्ये तु आकाङ्क्षायाः परतन्त्रा एव ॥ ४ ॥

न सदा न तदा न चैकदे-
त्यपि सा यत्र न कालधीर्भवेत् ।
तदिदं भवदीयदर्शनम्
न च नित्यं न च कथ्यतेऽन्यथा ॥ ५ ॥

नेति । सदा इति एकदा इति परस्परप्रयोगितया एकदेत्यस्य प्रकारस्तदा इत्यपि एवंप्रकारा अपि, यदेति इदानीमित्यादिका च यत्र न सा काचित् कालधीरकालकलितत्वात् तदित्यसामान्यम् इदमिति स्फुरद्रूपं ज्ञानं त्वदीयं न नित्यं कथ्यते, नाप्यनित्यं, नित्यत्वानित्यत्वयोः परस्परप्रतियोगित्वात् सर्वात्मकसाक्षात्कारिणि रूपे व्यवहारानुपपत्तेः ॥ ५ ॥

त्वद्विलोकनसमुत्कचेतसो
योगसिद्धिरियती सदाऽस्तु मे ।
यद्विशेयमभिसन्धिमात्रत-
स्त्वत्सुधासदनमर्चनाय ते ॥ ६ ॥



त्वदिति । इयती इति, न तु परिमितफलोन्मुखी अभिसन्धिमात्रतः इच्छामात्रात्, त्वदीयं सुधासदनं परमानन्दधाम, सदा विशेयं तत्समाविष्टः स्यामिति अर्चनं प्राग्वत् ॥ ६ ॥

निर्विकल्पभवदीयदर्शन-
प्राप्तिफुल्लमनसां महात्मनाम् ।
उल्लसन्ति विमलानि हेलया
चेष्टितानि च वचांसि च स्फुटम् ॥ ७ ॥

निर्विकल्पेति । कवलितविकल्पत्वदीयसाक्षात्कारप्राप्त्या विकसितमनसां भक्तिभाजां, विमलानीति जगदुद्धरणक्षमाणि, हेलामात्रेण चरितानि, वाक्यानि च, स्फुटं कृत्वा समुल्लसन्ति । यदागमः "दर्शनात्स्पर्शनाद्वाऽपि विततादृवसागरात् । तारयिष्यन्ति वीरेन्द्राः कुलाचारप्रतिष्ठिताः" इति ॥ ७ ॥

भगवन्भवदीयपादयो-
र्निवसन्नन्तर एव निर्भयः ।
भवभूमिषु तासु तास्वहं
प्रभुमर्चेयमनर्गलक्रियः ॥ ८ ॥

भगवन्निति । पादयोः ज्ञानक्रियाशक्त्योः, मध्य एव निवसन् अत एवाहं तासु तासु अति विततासु भवभूमिषु निर्भयः सन्, अनियन्त्रितचेष्टितः सर्वदशासु प्राग्वत्पूजापरः स्याम् ॥८॥

भवदङ्घ्रिसरोरुहोदरे
परिलीनो गलितापरैषणः ।

अतिमात्रमधूपयोगतः

परितृप्तो विचरेयमिच्छया ॥ ९ ॥

भवदङ्घ्रीति । अङ्घ्रिसरोरुहोदरं प्राप्य, तत्र परितः समन्ताल्लीनः, क्लिष्टः सन्, इच्छया विचरेयं पदात्पदं तदाक्रान्तिभाग्भवेयम्, कीदृशः, गलिताः शान्ता अपराः त्वन्मरीच्याश्लेषाभिलाषव्यतिरिक्ताः एषणा आकाङ्क्षा यस्य तादृक्, यतोऽतिमात्रं भृशं मधुनः आनन्दरसस्योपयोगेन आस्वादेन, परितस्तृप्तः ॥ ९ ॥

यस्य दम्भादिव भवत्पूजासङ्कल्प उत्थितः ।

तस्याप्यवश्यमुदितं सन्निधानं तवोचितम् ॥ १० ॥

यस्येति । यस्येति आर्तादेः, दम्भादिव न तु निर्दैन्यैकभक्तियोगेन, सङ्कल्प इति विकल्पमात्रम्, अत्रैकवारावलेपमात्रसम्पन्नलिङ्गाचापरिरक्षितसकलनरकपातास्त्रिलोकीजनो दृष्टान्तः, उचितमिति तावन्मात्रार्थिता परिपूर्तिक्षमम् ॥ १० ॥

भगवन्नितरानपेक्षिणा

नितरामेकरसेन चेतसा ।

सुलभं सकलोपशायिनम्

प्रभुमातृप्ति पिबेयमस्मि किम् ॥ ११ ॥

भगवन्निति । किमस्मि, त्वां प्रभुं, सकलोपशायिनं सर्वगतमत एव सुलभमातृप्तिचेतसा, पिबेयं त्वदैकात्म्यमनुभवेयं, कीदृशेन चेतसा, नितरामतिशयेन एकत्रैव त्वत्समावेशभक्तौ न तु क्वचिदपि फले रसोऽभिलाषो यस्य तेन, अनेन विशेषणेन प्रागुक्तश्लोकार्थवैपरीत्येन निर्व्याजभक्तिरुक्ता ॥ ११ ॥



त्वया निराकृतं सर्वं हेयमेतत्तदेव तु ।

त्वन्मयं समुपादेयमित्ययं सारसङ्ग्रहः ॥ १२ ॥

त्वयेति । यत्किञ्चित्त्वदैक्यप्रत्यभिज्ञां विना हेयं तदेव त्वन्मयं प्रत्यभिज्ञातमुपादेयम्, सारसङ्ग्रह इति सर्वसम्प्रदायसतत्त्वम् ॥ १२ ॥

भवतोन्तरचारि भावजातम्

प्रभुवन्मुख्यतयैव पूजितं तत् ।

भवतो बहिरप्यभावमात्रा

कथमीशान भवेत्समर्च्यते वा ॥ १३ ॥

भवत इति । भवतोन्तरचारि त्वदैक्येन स्थितं, यद्भावजातं तत् मुख्यतया प्राधान्येनैव, प्रभुरिति पूजितं भवति तत्त्वज्ञेन भवतस्तु प्रकाशात्मनो बहिरप्यप्रकाशात्मनो बहिरास्तांभावः अभावमात्राऽपि न भवति, कुतः पुनरभ्यर्च्यते सर्वस्य चित्प्रकाशात्मनैव सत्वादन्यथात्वाचित्वात् मात्रशब्दोऽतिशयोक्तिपरः, अभावोऽपि बुद्ध्यमानो बोधात्मैवेत्यादि हि प्रत्यभिज्ञायां निर्णीतमेव, अनेन भेदवादिनामर्चनानुपपत्तिः सूचिता ॥ १३ ॥

निःशब्दं निर्विकल्पं च

निर्व्याक्षेपमथानिशम् ।

क्षोभेप्यध्यक्षमीक्षेयं

त्र्यक्ष त्वामेव सर्वतः ॥ १४ ॥

निःशब्दमिति । हे त्र्यक्ष, क्षोभेऽपि ग्राह्यग्राहकप्रसरेऽपि, अध्यक्षमविकल्पं कृत्वा त्वामेव चिद्रूपमनिशं सदा, निर्विक्षेपं

वीतविघ्नं कृत्वा सर्वत्र ईक्षेयमात्मसाक्षात्कुर्याम्, कीदृशं निःशब्दं, वैयाकरणाद्युक्तशब्दब्रह्मविलक्षणं, "मम योनिर्महद्ब्रह्म" इति नीत्या भगवतः परब्रह्मणोऽत्युत्तमत्वात्, अत एव विकल्पेभ्यो भावनादिरूपेभ्यो निःक्रान्तम् अनन्तचिन्मात्ररूपम् ॥ १४ ॥

प्रकटय निजधाम देव यस्मि-
न्स्त्वमसि सदा परमेश्वरीसमेतः ।
प्रभुचरणरजःसमानकक्ष्याः
किमु विश्वासपदं भवन्ति भृत्याः ॥ १५ ॥

प्रकटयेति । निजधाम चिद्रूपं, परमेश्वरी परा भगवती, भृत्या इति, धार्याः पोष्याश्च, प्रभुचरणेत्यादि दासस्योचितैवोक्तिः, रजस्समानकक्ष्यत्वेन नित्यसंलग्नतामाह ॥ १५ ॥

दर्शनपथमुपयातोऽप्यपसरसि-
कुतो ममेश भृत्यस्य ।
क्षणमात्रकमिह न भवसि
कस्य न जन्तोर्दृशोर्विषयः ॥ १६ ॥

दर्शनपथमिति । दर्शनपथं साक्षात्कारगोचरमपि प्राप्तो, मम भृत्यस्य आश्वस्तस्य दासस्य, कुतोऽपसरसि नैवापसरसि त्वामवष्टभ्यैवाहं स्थित इति यावत्, ननु मां साक्षात्कृत्यैव किं न तुष्यसीत्यत आह, कस्य जन्तोर्दृशो ज्ञानस्य अज्ञातोऽपि क्षणमात्रमतिक्रुद्धः प्रहृष्टो वेत्यादिभूमिषु विषयो ननु भवसि सर्वस्य हि कदाचित्स्फुरसि, अहं तु अनुपचरितो भृत्यः, क्षणमपि न त्वां त्यजामि, यदि वा साक्षात्कृतोऽपि त्वं व्युत्थानावरोहणे किमिति मे भृत्यस्य आश्वस्तस्यापि अपसरसीति योज्यम् ॥ १६ ॥



ऐक्यसंविदमृताच्छधारया
सन्ततप्रसृतया सदा विभो ।
प्लावनापरमभेदमानयं-
स्त्वां निजं च वपुराप्नुयां मुदम् ॥ १७ ॥

ऐक्येति । ऐक्यसंविदद्वयदृष्टिः, सैवामृतस्य परमानन्दस्य सम्बन्धिनी अच्छा विश्वप्रतिबिम्बनक्षमा धारा तया सन्ततमविच्छेदेन प्रसृतया कृतं यत्प्लावनं सर्वत आपूरणं तस्मात्त्वां स्वं च वपुः सङ्कुचिताभिमतं स्वरूपं परमतिशयेन अभेदमेकात्मतामानयन् कदा मुदं सन्तोषमाप्नुयाम् ॥ १७ ॥

अहमित्यमुतोऽवरुद्धलोका-
त्त्वदीयात्प्रतिपत्तिसारतो मे ।
अणुमात्रकमेव विश्वनिष्ठम्
घटतां येन भवेयमर्चिता ते ॥ १८ ॥

अहमिति । विश्वनिष्ठमिति यद्यन्मम कुत्रचिद्भाति तत्र सर्वत्रावरुद्धलोकं स्वीकृताशेषनिर्भरमहमिति यदेतत्त्वदीयं सर्वत्र प्रतिपत्तीनां सारम् उत्कृष्टं स्वरूपं, ततोऽणुमात्रकं मृगमदकणकल्पमपि किंचिन्मह्यं घटतामुपतिष्ठतां, येन घटितेन तत्तद्द्रव्यग्रासीकारक्रमेण तव अर्चिता भवामि, अणुमात्रकमिति अतिस्पृहयालुतयोक्तिः न तु पूर्णाऽहन्ताया भागाः सन्ति ॥१८॥

अपरिमितरूपमहं तं तं भावं प्रतिक्षणं पश्यन् ।
त्वामेव विश्वरूपं निजनाथं साधु पश्येयम् ॥ १९ ॥

अपरिमितेति । तं तमिति यं कंचित् त्वामेवेति तस्य प्रकाशमानत्वेन त्वद्रूपात्, विश्वरूपमिति प्रदेशोऽपि ब्रह्मण इति

स्थिता पूर्ण, साध्विति निष्प्रयासं सत्यस्वरूपतया च ॥ १९ ॥

भवदङ्गगतं तमेव कस्मा-
न्न मनः पर्यटतीष्टमर्थमर्थम् ।
प्रकृतिक्षतिरस्ति नो तथाऽस्य
मम चेच्छापरिपूर्तये परैव ॥ २० ॥

भवदिति । तमेवेति यं यमभिलषितमर्थं मनः पर्यटति तं तं भवदङ्गगतं चिन्मयत्वेन ज्ञातमत एवेष्टम् अभिलषितमर्थं किमिति न पर्यटति तथा कुरु यथैवं पर्यटतीत्यर्थः, एवं सति अस्य न प्रकृतिक्षतिः काचित् इच्छाव्याघाताभावात्, मम च परैव चिद्घनस्वरूपलिप्सासारेच्छा परिपूर्यते । अनेनैतदाह मनसि यथारुचि पर्यटति अहं पूर्णप्रथासार एव यथा स्यामिति ॥ २० ॥

शतशः किल ते तवानुभावा-
द्भगवन्केऽप्यमुनैव चक्षुषा ये ।
अपि हालिकचेष्टया चरन्तः
परिपश्यन्ति भवद्वपुः सदाऽग्रे ॥ २१ ॥

शतश इति । हालिकचेष्टयाऽपि चरन्तः तवानुभावात् त्वत्प्रयुक्तादनुभवनव्यापारात् भवद्वपुस्त्वदीयं चित्स्वरूपममुनैव चक्षुषा करणोन्मीलनदशायामपि सदाऽग्रे परितः, पश्यन्ति समाविशन्ति, शतशः सहस्रमध्यात्केऽपि विरला अलौकिका इत्यर्थः ॥ २१ ॥

न सा मतिरुदेति या न भवति त्वदिच्छामयी
सदा शुभमयेतरद्भगवतैवमाचर्यते ।



अतोऽस्मि भवदात्मको भुवि यथा तथा संचरन्
स्थितोऽनिशमबाधितत्वदमलाङ्घ्रिपूजोत्सवः ॥२२॥

नेति । सर्वेषां ज्ञानानां प्रथमेन पादेन परमार्थतः शिवभक्तिमयत्वम्, द्वितीयेन व्यापाराणां भगवत्कृतत्वमुक्तम्, यथा तथेति गतसङ्कोचम्, अबाधितो न केनचिदप्यपसारितस्तन्मरीच्यर्चनप्रमोदो यस्य ॥ २२ ॥

भवदीयगभीरभाषितेषु
प्रतिभा सम्यगुदेतु मे पुरोऽतः ।
तदनुष्ठितशक्तिरप्यतस्त-
द्भवदर्चाव्यसनं च निर्विरामम् ॥ २३ ॥

भवदीयेति । गभीरभाषितेष्विति । मुख्ये भेदार्थत्वेन भासमानेष्वपि गर्भीकृतरहस्यार्थेषु वाक्येषु तावकेषु, मम पुरः पूर्वं, प्रतिभा नवनवोल्लेखिनी प्रज्ञा, सम्यगविपर्यस्तत्वेनोदेतु, अतोऽप्यनन्तरं, तदिति अलौकिकं, निर्विरामं कृत्वा भवदर्चायां व्यसनमुदेतु ॥ २३ ॥

व्यवहारपदेऽपि सर्वदा
प्रतिभात्वर्थकलाप एष माम् ।
भवतोवयवो यथा न तु
स्वत एवादरणीयतां गतः ॥ २४ ॥

व्यवहारेति । एषः अर्थकलापः व्यवहारेऽपि भगवतश्चिन्मयस्य, यथाऽवयवः अङ्गकल्पोऽभेदेन स्थितस्तथा मां प्रतिभातु मम प्रतिभासताम्, न पुनस्त्वन्मयत्वमविदित्वा स्वत एव सुखादिहेतुत्वेनादरणीयतां गतः ॥ २४ ॥

मनसि स्वरसेन यत्र तत्र
प्रचरत्यन्वहमस्य गोचरेषु ।
प्रसृतोप्यविलोल एव युष्म-
त्परिचर्याचतुरः सदा भवेयम् ॥ २५ ॥

मनसीति । यत्र तत्रेति हेयादिविषयेषु, प्रसृतोऽपि ग्रहणे प्रवृत्तोऽपि, अविलोलः अलम्पटः, युष्मत्परिचर्या त्वदर्चा तत्र चतुर एव कुशल एव स्याम्, एवशब्दो भिन्नक्रमः ॥ २५ ॥

भगवन्भवदिच्छयैव दास-
स्तव जातोऽस्मि परस्य नात्र शक्तिः ।
कथमेष तथापि वक्त्रबिम्बं
तव पश्यामि न जातु चित्रमेतत् ॥ २६ ॥

भगवन्निति । भगवदिच्छयैवेति, एवकारेण शक्तिपातस्य स्वतन्त्रतामाह, तथाऽपीति, एवमपि दास्ये लब्धेऽपि, वक्त्रबिम्बं सुन्दरं परशक्तिमार्गम्, एष इति, व्युत्थानावस्थोचितदेहादिप्रमातृरूपः, जातु कदाचित्, व्युत्थाने न पश्यामि नासादयामि ॥ २६ ॥

समुत्सुकास्त्वां प्रति ये भवन्तं
प्रत्यर्थरूपादवलोकयन्ति ।
तेषामहो किं तदुपस्थितं स्यात्
किं साधनं वा फलितं भवेत् तत् ॥ २७ ॥

समुत्सुका इति । सम्यगुत्सुकाः भक्तिभरेणोत्कण्ठिताः, प्रत्यर्थरूपादिति विषयं विषयमासाद्य, किं तदिति, तेनैवानुभाव्यं न वक्तुं शक्यं, किं तत्साधनमिति अस्माभिरसंभाव्यम् ॥ २७ ॥



भावाभावतया सन्तु भवद्भावेन मे भव ।
तथा न किंचिदप्यस्तु न किंचिद्भवतोऽन्यथा ॥ २८ ॥

भावाभावेति । ये भावा इत्यभिधीयन्ते ते मम त्वन्मयत्वेन भावा विद्यमाना भवन्तु, यत्र किंचिदुच्यते तत् त्वन्मयतां विना न किंचिदस्तु ॥ २८ ॥

यन्न किंचिदपि तन्न किंचिद-
प्यस्तु किंचिदपि किंचिदेव मे ।
सर्वथा भवतु तावता भवान्
सर्वतो भवति लब्धपूजितः ॥ २९ ॥

यन्नेति । लोकेन न किंचिदपीति यत् न किञ्चिदेवानुपादेयतया कथ्यते तत् मम न किंचित् अपि तु सर्वभेदमयं न किंचिद्भवतु, यत्तूपादेयतयाऽभिमतं किञ्चिदिति भण्यते तन्मम किञ्चिदेव किञ्चिदित्यसामान्यं स्वानुभवैकसाक्षिकं वस्तु सर्वथाऽस्तु, यद्वा यल्लोके किञ्चिच्चिद्घनं रूपं यत् तदप्रत्यभिज्ञानात् न किञ्चित्त्वेन भाति, यत्तु भेदमयमवस्तु न किंचित् तन्मायाव्यामोहात्किञ्चित्त्वेन स्फुरति, मम तु न किञ्चित् किंचिच्च न किञ्चिदस्तु लौकिकवद्विपर्ययो मा भूदित्यर्थः, एतावता भवान् चिद्रूपः सर्वत्र लब्धश्च पूजितश्च शिवम् ॥ २९ ॥

इति श्रीमदुत्पलदेवाचार्यविरचितस्तोत्रावलौ रहस्यनिर्देशनामक-
द्वादशस्तोत्रे श्रीक्षेमराजकृता विवृतिः ॥

ॐ तत्सत् ।

संग्रहेण सुखदुःखलक्षणं
मां प्रति स्थितमिदं शृणु प्रभो ।
सौख्यमेव भवता समागमः
स्वामिना विरह एव दुःखिता ॥ १ ॥

संग्रहेणेति । अथ स्तोत्रकाररचितचारुरचनाविशिष्टं संग्रहस्तोत्रं व्याकुर्मः । अत्र तु या प्रयोगरूढिरिति संज्ञा पुस्तकेषु दृश्यते साऽवान्तरैव साक्षात्कारेण चिद्भैरवं समाविश्य व्युत्थानेऽपि बलवत्तत्संस्काराद्भमभिमुखीभाव्य प्रतिभातं वस्तु विज्ञातुमाह । हे प्रभो मां प्रति स्थितं न तु अन्यस्य कस्यापि स्फुरितं, संग्रहेण संक्षेपेण, सुखदुःखलक्षणं शृणु, प्रभो इत्यामन्त्रणम्, स्वात्मसमावेशक्रमेणैव परमेशितुः सुसंमुखीकरणायालौकिकपादशब्दान्तरहस्यमन्त्रवत्, तल्लक्षणमाह, भवता स्वामिना चिन्नाथेन, एष इति साक्षात्कारेण स्फुरन् समागमः समावेशैक्यं यत् तत्सौख्यं सुखं स्वार्थे ष्यञ्, स एव सौख्यं, स च सौख्यमेव, उत्तरत्र स्थित एवशब्दः इहाप्युभयथा योज्यः, प्रभुणा हि यो विरहः प्रभुस्वरूपाप्रत्यभिज्ञानं स एव दुःखिता ॥ १ ॥

अन्तरप्यतितरामणीयसी
या त्वदप्रथनकालिकाऽस्ति मे ।
तामपीश परिमृज्य सर्वतः
स्वं स्वरूपममलं प्रकाशय ॥ २ ॥

अन्तरिति । यत एवं ततः, अपिर्भिन्नक्रमः, अतितरामणीयस्यपि या मम त्वदप्रथनकालिका भवदख्यातिमलिनता, अन्त-



रिति, समावेशे प्राणादिसंस्काररूपाऽस्ति, तामपीति, बही तावदसौ शक्तिपातात्प्रभृत्येव मे त्वया अपहस्तिता अतिसूक्ष्मामपि तां परिमृज्योत्प्रोंछ्य, सर्वत इति, अन्तर्बहिश्च स्वं चिन्मयं सर्वस्यात्मीयं स्वरूपं निमर्लं प्रकाशय स्फारय ॥ २ ॥

एतदेव च मे परमभिलषितमित्याह—

तावके वपुषि विश्वनिर्भरे
चित्सुधारसमये निरत्यये ।
तिष्ठतः सततमर्चतः प्रभुं
जीवितं मृतमथान्यदस्तु मे ॥ ३ ॥

तावक इति । यत्प्रकाशते तत्प्रकाशरूपमेव सत्प्रकाशयितुमर्हति प्रकाशस्य च देशकालादिप्रकाशमानत्वात् तत्स्वरूपमेव सम्भेदकं नोपपद्यते इत्ययत्नसिद्धम् विश्वरूपत्वं, चिदाह्लादात्मनः स्वरूपे निरत्यये अविनाशिनि तिष्ठन्नेवार्चासमर्थः अर्चन्नेव च स्थातुं क्षम इति हेतौ शतारौ तौ च नित्यप्रवृत्ततां व्यङ्क्तः, स्थितिस्तत्तद्भूमिलाभः, अर्चा तदेकपरामर्शव्यग्रत्वम्, एवमुत्तरत्र अन्यदित्यनेन चिद्रूपतास्थितिबहुमानेन अवस्थात्रियमनादरं ध्वनति ॥ ३ ॥

ननु जीवदादिभूमयः अभिमानमय्यः ताः किमितीष्यन्ते इत्याशङ्क्य त्वत्स्वरूपेऽवस्थितस्याभिमाना अप्यलौकिकचमत्कारयुक्ता एव, इतरथा तु निरभिमानताऽपि न काचिदिति वक्तुमाह—

ईश्वरोहमहमेव रूपवान्
पण्डितोऽस्मि सुभगोऽस्मि कोऽपरः ।
[illegible] मत्समोऽस्ति जगतीति शोभते
मानिता त्वदनुरागिणः परम् ॥ ४ ॥



ईश्वरोऽहमिति । त्वदनुरागिणः त्वत्समावेशेन प्राप्तत्वदैक्यस्य, परमिति तस्यैव न तु ब्रह्मादेरपि ईश्वरः सर्वस्वतन्त्रोऽहम् अहमेव च रूपवान् चिदात्मना प्रशस्तेन स्वरूपेण युक्तः, पण्डा सम्यक् तत्त्वदर्शिनी प्रज्ञा सञ्जाता यस्य सोऽस्मि, सुभगः परमानन्दरसोल्बणत्वेन सर्वस्य स्पृहणीयोऽस्मि, तत्किं बहुना मत्समः कोऽपरोऽस्ति न कश्चित्, मयैव चिदानन्दात्मना विश्वस्यात्मसाक्षात्कारादितीदृशी मानिता साभिमानित्वं, शोभते दीप्यते, अन्यथा पुनर्बोधाद्यभिमता सङ्कोचवती अविकल्पिताऽपि मलिनैव "स्वसोपानपदारूढ्या भर्तुः स्यादन्तिके स्थितिः । इतरस्तु विकल्पानां वैमुख्याद्ग्राह्यभूमिग इति", त्वदनुरागिणो यत एवं मानिताऽपि शोभते ततः ॥ ४ ॥

देवदेव भवदद्वयामृता-
ख्यातिसंहरणालब्धजन्मना ।
तद्यथास्थितपदार्थसंविदा
मां कुरुष्व चरणार्चनोचितम् ॥ ५ ॥

देवेति । हे देवदेव अशेषाधिपते, भवदद्वयामृताख्यातेः त्वदैक्यानन्दाप्रथायाः संहरणेन लब्धं जन्म यया तया यथास्थितानां चिदेकात्मनां पदार्थानां संविदा मां स्वमरीच्यर्चितं कुरु, तच्छब्दः पूर्वश्लोकापेक्षया हेतौ ॥ ५ ॥

कीदृश्यसावर्चा यदुचितं त्वां करोमीति भगवदुक्तिं सम्भावयन् आह—

ध्यायते तदनुदृश्यते ततः
स्पृश्यते च परमेश्वरः स्वयम् ।
यत्र पूजनमहोत्सवः स मे
सर्वदाऽस्तु भवतोनुभावतः ॥ ६ ॥



ध्यायत इति । "उच्चाररहितं वस्तु चेतसैव विचिन्तयन्" इति स्थित्या ध्यायते तदनुदृश्यते समावेशात्प्रकाशते, ततोऽपि स्पृश्यते, गाढगाढसमाश्लेषणैकीक्रियते स्वयमेव न तु उच्चारकरणादिपारम्पर्येण स्वयं चानुपचितेन चिन्मयेन वपुषा अनन्याकारविशेषेण, यत्रेति पूजनमहोत्सवे, महोत्सवशब्देनास्यान्तमुपादेयतामस्य वदन्नात्मनस्तदासक्त्या प्रमोदनिर्भरतां ध्वनाति, अनुभावत इति ममानुभावतस्त्वदीयानुभवकव्यापारात् ॥ ६ ॥

एतदेव श्लाघमान आह—

यद्यथास्थितपदार्थदर्शनम्
युष्मदर्चनमहोत्सवश्च यः ।
युग्ममेतदितरेतराश्रयम्
भक्तिशालिषु सदा विजृम्भते ॥ ७ ॥

यदिति । यथास्थितानां पदार्थानां दर्शनं विज्ञानं, न त्वदद्वयपूजामहोत्सवः तं च विना न यथास्थितवस्तुज्ञानमितीदं द्वयमितरेतराश्रयम् भक्तिशालिषु सदा विजृम्भते, त्वयैवास्योभयस्य युगपत्प्रकाशात् ॥ ७ ॥

तत्तदिन्द्रियमुखेन सन्ततम्
युष्मदर्चनरसायनासवम् ।
सर्वभावचषकेषु पूरिते-
ष्वापिबन्नपि भवेयमुन्मदः ॥ ८ ॥

तदिति । स्फुरदुपायपुरःसरमेतदाशंसापर आह सर्वभावा [illegible]व चषकाणि पानपात्राणि तेषु, चक्षुरादिमुखेन महार्थदृष्ट्या [illegible]दिक्यास्तेन पूरितेषु भृतेषु, तदाहरणक्रमेण तुर्यारोहरूपं

युष्मत्पूजारसायनपानं आसमन्तात्पिबन्, उद्गतमदोऽपि नाम
भवेयम् एतत्प्रार्थये प्रभुमेवार्थये ॥ ८ ॥

अन्यवेद्यमणुमात्रमस्ति न
स्वप्रकाशमखिलं विजृम्भते ।
यत्र नाथ भवतः पुरे स्थितिम्
तत्र मे कुरु सदा तवार्चितुः ॥ ९ ॥

अन्यवेद्यमिति । यत्र भवत्पुरे पूरके चिदात्मनि रूपे,
व्यतिरिक्तस्य कस्यचिदेवाभावात् अन्याद्भिन्नं वेद्यम् अणुमात्र-
मपि नास्ति अपि तु अखिलं ग्राह्यग्राहकरूपं स्वप्रकाशमेव
विजृम्भते, तत्र मे त्वदर्चापरस्य सदाऽवस्थितिं गाढगाढसमावे-
शरूपां कुरु ॥ ९ ॥

दासधाम्नि विनियोजितोप्यहम्
स्वेच्छयैव परमेश्वर त्वया ।
दर्शनेन न किमस्मि पात्रितः
पादसंवहनकर्मणाऽपि वा ॥ १० ॥

दासधाम्नीति। एवमर्थितेऽपि जगतीप्सितमनाप्नुवन् खिन्न
इवाह दासेति। स्वेच्छयैव न तु अन्यप्रेरणादिना, निरपेक्षो हि
शक्तिपात इत्युक्तमेव दर्शनेन शाम्भवसमावेशात्मना परसाक्षा-
त्कारानुप्रवेशेन पात्रितो भाजनीकृतः, पादसंवहनकर्मणा रुद्रश-
क्तिसमावेशाह्लादनेन अनुरणनोक्त्या लौकिकेश्वरार्थः प्राग्वत् १०

शक्तिपातसमये विचारणम्
प्राप्तमीश न करोषि कर्हिचित् ।



अद्य मां प्रति किमागतं यतः
स्वप्रकाशनविधौ विलम्बसे ॥ ११ ॥

शक्तिपातेति।सोपालम्भमिव प्रभुमभिमुखयितुमाह शक्तिपा-
तेति।प्राप्तमित्युचितम्,ईशेत्यामन्त्रणं स्वतन्त्रशक्तिपातक्रमानुरूपं,
कर्हिचित् कदाचित् अद्येति, सम्पन्नेप्यनुग्राह्यात्मनि शक्ति-
पाते किमागतमिति क एष प्रकारः यत् चिदात्मकस्वात्मप्रका-
शात्मनि विधौ अवश्यकार्येऽपि विलम्बसे, अद्यापि कालक्षेपं
करोषि, मा कृथाः ॥ ११ ॥

तत्र तत्र विषये बहिर्विभा-
त्यन्तरे च परमेश्वरीयुतम् ।
त्वां जगत्त्रितयनिर्भरं सदा
लोकयेय निजपाणिपूजितम् ॥ १२ ॥

तत्रेति। पुनरपि भगवत्समावेशाशंसापर आह तत्रेति। बहि-
रिति, बाह्ये नीलादौ आन्तरे च सुखादौ, च विभासति त्वां
पारमेश्वर्या परशक्त्या युतं नित्यसम्बद्धं, प्राग्वज्जगत्त्रयेण विश्वेन
निर्भरं, लोकयेय साक्षात्कुर्यां, निजेन पाणिना पञ्चावर्तमध्यमध्य-
मप्राणशक्त्युद्बोधनक्रमाद्धृतविश्वार्पणसमेधेनार्चितम्, अत्र पाणिः
शक्तिः यथोक्तमाम्नाये "हस्तः शक्तिः प्रकीर्तित" इति, एत-
त्पूजोचितम् ॥ १२ ॥

स्वामिसौधमभिसन्धिमात्रतो
निर्विबन्धमधिरुह्य सर्वदा ।
स्यां प्रसादपरमामृतासवा–
पानकेन परिलब्धनिर्वृतिः ॥ १३ ॥

स्वामीति । नित्योदितसमावेशरूपमेव फलमाकाङ्क्षन्नाह स्वामीति । स्वामिनः सम्बन्धिनं सौधम् अतिस्पृहणीयं स्वधामसमूहमत्युच्चैः शाक्तं पदमभिसन्धिमात्रत इत्युच्चारकरणाद्यनपेक्षम् इच्छामात्रेणैव विनिर्बन्धं कृत्वाऽधिरुह्य देहादिभूमिन्यग्भावेन स्वीकृत्य, प्राग्व्याख्यातप्रसादपरमामृतासवापानक्रीडया परिलब्धनिर्वृतिः आनन्दपरिपूर्णः, सदा स्याम्, अनुरणनशक्त्या दृष्टान्तालङ्कारध्वनिना लौकिकेश्वरार्थः प्राग्वत् ॥ १३ ॥

यत्समस्तसुभगार्थवस्तुषु
स्पर्शमात्रविधिना चमत्कृतिम् ।
तां समर्पयति तेन ते वपुः
पूजयन्त्यचलभक्तिशालिनः ॥ १४ ॥

यदिति । प्रतिपादितपूजोपायमाह यदिति । मायाशक्त्या यद्यपि हेयोपादेयताभाञ्जि तथाऽपि वस्तुतश्चिन्मयत्वात्सुभगार्थानि सुभगप्रयोजनान्येव समस्तानि वस्तूनि तेषु विषयभूतेषु, यत्किञ्चिदिन्द्रियपथगतं तदीयरूपस्पर्शादि, स्पर्शमात्रविधिना संवित्सङ्कल्पविकल्पेन संविद्व्यापारेण, तामिति असामान्यां चमत्कृतिं, सम्यगर्पयति वितरति, तेन यच्छब्दपरामृष्टेन वस्तुस्वरूपेण, ते वपुश्चिन्मयरूपम्, अचलभक्त्या नवनवसमावेशेन शालमानाः, पूजयन्ति तर्पणक्रमेण त्वय्येवं विश्राम्यन्ति ॥ १४ ॥

स्फारयस्यखिलमात्मना स्फुरन्
विश्वमामृशसि रूपमामृशन् ।
यत्स्वयं निजरसेन घूर्णसे
तत्समुल्लसति भावमण्डलम् ॥ १५ ॥



स्फारयसीति । ननु मलिनैरर्थैः कथं शुद्धस्वरूपभगवदर्चा इत्याशङ्क्य सर्वदशासु अर्थानां भगवत्स्वरूपतया शुद्धतां वक्तुमाह स्फारयसीति । आत्मना चिन्मयेन, स्फुरन् भासमानः, अखिलं विश्वं स्फारयसि विकस्वरस्वात्मप्रथास्फुरणेन फुल्लयसि, तथा स्वरूपमामृशन्निजस्वरूपं चमत्कुर्वन्, निखिलं विश्वमामृशसि आस्वादनेन आनन्दघनं घटयसि, यश्च स्वयं निजेन चिद्रसेन घूर्णसे पूर्णत्वात्समुच्छलत्तया स्पन्दसे, तद्भावमण्डलमखिलं पदार्थजातं, समुल्लसति चिद्रूपावुन्मीलति, एवमनेन विश्वस्याभेदसाराः परदशोचिताःस्थितिसंहारसर्गाःज्ञानेच्छाक्रियाशक्तिपरिस्पन्दरूपाः क्रमेणोक्ताः, अक्रमेऽपि हि संवित्तत्त्वे व्यावृत्तिभेदेन सृष्टिस्थितिसंहारशक्त्यवियोगः सनातनत्वेन वर्ण्यतापि यदपेक्षयाऽयं क्रमव्यवहारः । तथा च श्रीपूर्वशास्त्रेषूक्तम् "सव्यापाराधिपत्वेन तद्धीनप्रेरकत्वतः । इच्छानिवृत्तेः स्वस्थत्वादभिन्नमपि पञ्चधा ॥" इति । सृष्टिस्थितिसंहाराणां विपर्यस्तत्वेन प्रतिपादनं चिन्मयत्वेनाक्रमतापरमार्थप्रकाशनाय ॥ १५ ॥

यो विकल्पमिदमर्थमण्डलं
पश्यतीश निखिलं भवद्वपुः ।
स्वात्मपक्षपरिपूरिते जग-
त्यस्य नित्यसुखिनः कुतो भयम् ॥ १६ ॥

य इति । ननु परमेश्वरभूभावभिन्नानामर्थानामस्तु शुद्धत्वं मायापदे तु भेदविघ्नव्याकुलिते कथमेतदित्याशङ्क्य भेदविघ्नप्रसरक्षयमाह य इति । हे ईश अर्थमण्डलं प्रमेयजातमविकल्पं कृ[illegible] हानादानादिबुद्धिपरिहारेण श्रीभैरवीयमुद्रावीर्यस्थित्या यो योगिवरो भवद्वपुश्चिद्रूपमेव कृत्वा पश्यति दर्पणोदरोन्मीलनप-

तिविम्बवत्साक्षात्करोति, अस्य स्वात्मपक्षेण चिदैक्येन परितः समन्तात् पूरिते स्वाभेदमापादिते, जगति भेदविघ्नस्योन्मूलनान्नित्यसुखिनः परमानन्दघनस्य, कुतो भयं न कुतश्चिदेवेतियुक्तमुक्तं प्राक्तेन ते वपुः पूजयन्त्यचलभक्तिशालिन इति ॥ १६ ॥

कण्ठकोणविनिविष्टमीश ते
कालकूटमपि मे महामृतम् ।
अप्युपात्तममृतं भवद्वपु-
र्भेदवृत्ति यदि मे न रोचते ॥ १७ ॥

कण्ठेति । इमामेवाद्वयदृष्टिं प्रशंसन्नाह कण्ठेति । कालकूटं महाविषमपि ते कण्ठकोणविनिविष्टं त्वदङ्गसङ्गततया स्थितं त्वदभेदेन प्रथमानं, मे महामृतं, परमव्याप्तिप्रदत्वात्, उक्तं हि "विषमप्यमृतायते" इति अमृतं तु पातुमपि लब्धुमपि यदि भवद्वपुषो भेदवृत्ति चिदद्वयदृशामस्पृशद्भाति, तदवास्तवत्वान्मह्यं न रोचते नाभिलापपदं ममेति यावत् ॥ १७ ॥

त्वत्प्रलापमयरक्तगीतिका-
नित्ययुक्तवदनोपशोभितः ।
स्यामथापि भवदर्चनक्रिया-
प्रेयसीपरिगताशयः सदा ॥ १८ ॥

त्वदिति । एवमद्वयसमावेशमात्मानि सदोचितत्वेनेप्सन्नाह त्वदिति । समावेशवैवश्यादनभिसन्धानमुच्चरन्तीभिस्त्वत्प्रलापमयीभिर्भक्त्यनुरागाभिव्यञ्जनाद्रक्ताभिर्मधुरसुन्दराभिर्गीतिकाभिर्नित्ययुक्तेन वदनेनोपशोभितोऽतिसुन्दररुचिः स्याम्, अथापि च, अपि च, व्याख्यातसतत्त्वतया भवदर्चनक्रिययैव प्रेयस्या परमश्रद्धया परिगतः स्वीकृतः आशयश्चित्तं यस्य, तस्याश्च परिगतः सम्यग्ज्ञातः आशयः स्वरूपं येन तथा भूतः सदा स्याम् ॥१८॥



ईहितं न बत पारमेश्वरं
शक्यते गणयितुं तथा च मे ।
दत्तमप्यमृतनिर्भरं वपुः
स्वं न पातुमनुमन्यते तथा ॥ १९ ॥

ईहितमिति । ननु च लब्धसमावेशचमत्कारोऽपि किमर्थं भूयो भूयः समावेशाकाङ्क्षापरोऽसीति शङ्कित्वेवाह ईहितमिति । परमेश्वरसम्बन्धीहितं विलसितं बताश्चर्यं, गणयितुं कलयितुं, न शक्यते, तथा च मे मह्यममृतनिर्भरमानन्दघनं, वपुः स्वरूपं, पातुं रसयितुं, दत्तमपि प्रसादीकृतमपि, तथेति यथारुचि निर्विरामं, पातुं, नानुमन्यते नाङ्गीकरोति, पुनर्व्युत्थानभूमिमेव प्रेरयतीत्यत इयमाकाङ्क्षेत्यर्थः, यत एवं ततः ॥ १९ ॥

त्वामगाधमविकल्पमद्वयं
स्वस्वरूपमखिलार्थघस्मरम् ।
आविशन्नहमुमेश सर्वदा
पूजयेयमभिसंस्तुवीय च ॥ २० ॥

त्वामिति । अगाधमपरिच्छेद्यमविकल्पं चिद्रूपमद्वयमभेदसारं, स्वं सर्वस्यात्मीयं स्वरूपमखिलानां षडध्वमयानामर्थानां घस्मरं मदनशीलं, त्वामाविशन्, हे उमेश पराभट्टारिकास्वामिन्नहं सदा पूजयेयं, "सा पूजा ह्याद्राल्लयः" इति स्थित्यार्चयेयं, अभितः समन्तात्सम्यगभेदपरामर्शसारतया स्तुवीय चेति शिवम् ॥२०॥

इति श्रीमदुत्पलदेवाचार्यविरचितस्तोत्रावल्यां सङ्ग्रहस्तोत्रनामनि त्रयोदशस्तोत्रे श्रीक्षेमराजविरचिता विवृतिः ॥ १३ ॥

ॐ जय लक्ष्मीनिधानस्य निजस्य स्वामिनः पुरः ।
जयोद्घोषणपीयूषरसमास्वादये क्षणम् ॥ १ ॥

जय लक्ष्मीति । इदमपि जयस्तोत्रं ग्रन्थकाराशय्यमेव । जयलक्ष्म्याः सर्वोत्कर्षश्रियो, निधानं समुचितमास्पदं, पुर इति साक्षात्कारसमनन्तरमेव, जयोद्घोषणमेवानन्दप्रदत्वात्पीयूषरसमास्वादये चमत्करोमि, क्षणं मुहुर्मुहुः, क्षणशब्दश्चास्यास्वादस्य सुलभतां ध्वनति ॥ १ ॥

जयैकरुद्रैकशिव महादेव महेश्वर ।
पार्वतीप्रणयिञ्शर्व सर्वगीर्वाणपूर्वज ॥ २ ॥

जयैकेति । प्रथममामन्त्रणद्वयमद्वयताप्रथनाय "एको रुद्र" इति श्रुतिरस्ति, एकः शिवो न तु भेदवादस्थिता बहवः, पार्वती परा शक्तिः, सर्वेषां गीर्वाणानां देवनां पूर्वज आद्य ॥ २ ॥

जय त्रैलोक्यनाथैकलाञ्छनालिकलोचन ।
जय पीतार्तलोकार्तिकालकूटाङ्ककन्धर ॥ ३ ॥

जय त्रैलोक्येति । त्रैलोक्यनाथत्वे एकमद्वयसूचकाद्वितीयमलौकिकं लाञ्छनमलिकलोचनं ललाटनेत्रं यस्य, भगवद्व्यतिरेकेणान्यस्याधोमुखाधोलोचनानुन्मीलनात्पीतमार्तलोकानां सर्वेषां सुरासुराणामार्तिहेतुत्वात्तद्रूपं कालकूटं महाविषं तदङ्का कन्धरा यस्य, कालकूटमार्तिरूपतयोत्प्रेक्षितम्, अथ च कालकूटगलत्वेन भगवतः सर्वसंसारार्तिहरत्वं सूच्यते ॥ ३ ॥

जय मूर्तत्रिशक्त्यात्मशितशूलोल्लसत्कर ।
जयेच्छामात्रसिद्धार्थपूजार्हचरणाम्बुज ॥ ४ ॥

जय मूर्तेति । मूर्ताः तिस्र इच्छाज्ञानक्रियारूपाः शक्तय



आत्मा यस्य तथाभूतेन शितेन संसारच्छेदकेन शूलेनोल्लसन् करः पाणिर्यस्य, अनेन शक्तित्रयस्य भगवदेकाधीनत्वमुक्तम्, इच्छामात्रेण सिद्धोऽर्थः प्रयोजनं याभ्यां सकाशात् तथाभूते अत एव पूजार्हे प्राग्वच्चरणाम्बुजे यस्य ॥ ४ ॥

जय शोभाशतस्यन्दिलोकोत्तरवपुर्धर ।
जयैकजटिकाक्षीणगङ्गाकृत्यात्तभस्मक ॥ ५ ॥

जय शोभेति । शोभाः प्रकाशाह्लादरुचयः वपुः स्वरूपम्, अल्पैकजटा एकजटिका तत्र क्षीणा येयं गङ्गाकृतिस्तदेवात्तं भस्म येन तथाभूतं कं शिरो यस्य, भगवतः शिरसि भस्मास्तीत्याद्यमविगीतमेव ॥ ५ ॥

जय क्षीरोदपर्यस्तज्योत्स्नाच्छायानुलेपन ।
जयेश्वराङ्गसङ्गोत्थरत्नकान्ताहिमण्डन ॥ ६ ॥

जय क्षीरोदेति । क्षीरोदे पर्यस्ता प्रसृता याऽसौ ज्योत्स्ना चन्द्रकान्तिस्तच्छायं शुभ्रमनुलेपनं यस्य, अङ्गसङ्गोत्थैः रत्नैः कान्ताः अहयः शेषवासुकिप्रभृतयो मण्डनं यस्य, ईश्वराङ्गसङ्गाद्भुजङ्गमानां रत्नप्राप्तिरिति ह्यागमः ॥ ६ ॥

जयाक्षयैकशीतांशुकलासदृशसंश्रय ।
जय गङ्गासदारब्धविश्वैश्वर्याभिषेचन ॥ ७ ॥

जयाक्षयैकेति । अक्षयायाः अमानाम्न्याः एकस्याः शीतांशुकलायाः सदृशोऽनुरूपो भगवानेव संश्रयः, तस्याप्यक्षयैकरूपत्वात्, चन्द्रकलया हि भगवतः एतत्परमार्थतैव सूच्यते, गङ्गया सदाऽऽरब्धं विश्वैश्वर्याभिषेचनं यस्य ॥ ७ ॥

जयाधराङ्गसंस्पर्शपावनीकृतगोकुल ।

**जय भक्तिमदारब्धगोष्ठीनियतसन्निधे ॥ ८ ॥**

जयाधराङ्गेति । अधराङ्गं पादस्तत्स्पर्शेन पवित्रीकृतं गोकुलं येन भगवता वृषभवाहनेन, यतो वृषभः पद्भ्यां स्पृष्टस्ततः सर्वत्र गोजातेः पवित्रत्वमविगीतं, भक्तिमद्भिः आबद्धायां गोष्ठ्यां नियतोऽवश्यंभावी सन्निधिर्यस्य ॥ ८ ॥

**जय स्वेच्छात्तपोवेषविप्रलम्भितबालिश ।**
**जय गौरीपरिष्वङ्गयोग्यसौभाग्यभाजन ॥ ९ ॥**

जय स्वेति । स्वेच्छया क्रीडया कृतेन उपमावेशेन च विप्रलम्भितास्त्रासिताः बालिशा येन, क्रीडामात्रेण भगवता जटादि विधृतं यत्तन्मूर्खाः ब्रह्मशिरश्छेदोत्थकिल्बिषशुद्ध्यर्थमिति प्रतिपन्नाः, सिद्ध्यर्थमेतादित्यपरे, इदमेतद्भगवतः सत्यं रूपमिति परे, तन्न सत्, भगवतः स्वतन्त्रचित्परमार्थस्यैवं रूपत्वानुपपत्तेः, गौरी परा शक्तिः तत्परिष्वङ्गयोग्यसौभाग्यस्य सर्वस्पृहणीयत्वस्य भाजन ॥ ९ ॥

**जय भक्तिरसार्द्रार्द्रभावोपायनलम्पट ।**
**जय भक्तिमदोद्दामभक्तवाङ्नृत्ततोषित ॥ १० ॥**

जय भक्तिरसेति । भक्तिरसेनार्द्रार्द्रः सरसो गलितो यो भाव आशयः स एवोपायनं ढौकनिका तत्र लम्पट झटित्यात्मसात्कारिन्, भक्तिमदेनोद्दामाः गर्जिता ये भक्ताः तदीयेन वाङ्नृत्तेन स्फूर्जत्स्तुतिमालाभिस्तोषित ॥ १० ॥

**जय ब्रह्मादिदेवेशप्रभावप्रभवव्यय ।**
**जय लोकेश्वरश्रेणीशिरोविधृतशासन ॥ ११ ॥**

जय ब्रह्मेति । ब्रह्मादिदेवेशानां यः प्रभावः सृष्ट्यादिसामर्थ्यं तस्य प्रभवव्ययौ उत्पादनाशौ, यतः लोकेश्वरश्रेण्या



इन्द्रादिलोकपालमालया शिरसा विधृतं शासनमाज्ञा यस्य, परमेशाज्ञानुवर्तिभिरिन्द्रादिभिर्दीक्षादौ स्थीयत इति शतशः आगमोक्तयः सन्ति ॥ ११ ॥

**जय सर्वजगन्न्यस्तस्वमुद्राव्यक्तवैभव ।**
**जयात्मदानपर्यन्तविश्वेश्वर महेश्वर ॥ १२ ॥**

जय सर्वेति । सर्वत्र जगति न्यस्तया स्वमुद्रयाऽऽनन्दसारज्ञानक्रियाशक्तिव्याप्तिमय्याऽवष्टम्भरूपया व्यक्तं वैभवं व्यापकत्वं प्रभुत्वं च यस्य । यदागमः "न चक्राङ्का न वज्राङ्का दृश्यन्ते जन्तवः क्वचित् । भगलिङ्गाङ्कितं विश्वं तेन माहेश्वरं जगत् ॥" इति । आस्तां तावद्ब्रह्मादीनां विभूत्यादिदानं त्वत्तः सर्वस्य त्वमात्मानं सत्तामपि ददासि स्वप्रकाशमयत्वत्स्वरूपं विना नीरूपत्वापत्तेरित्यात्मानं पर्यन्तं कृत्वा विश्वेश्वर, अत एवान्यस्यैवं रूपत्वाभावात्त्वं महानीश्वरः ॥ १२ ॥

**जय त्रैलोक्यसर्गेच्छावसरासद्वितीयक ।**
**जयैश्वर्यभरोद्वाहदेवीमात्रसहायक ॥ १३ ॥**

जय त्रैलोक्येति । त्रैलोक्यसर्गावसरेऽसन् द्वितीय उपादानसहकार्यात्माऽपेक्षणीयो यस्य, द्वितीयश्चेन्नास्ति।कथं शक्तिः शक्तिमांश्चेत्युद्घोष्यते इत्याह ऐश्वर्यभरोद्वाहे स्वेच्छावभासिताशेषलोकयात्रात्मने इति नयेन देवीमात्रं निजसामर्थ्यात्मा पराशक्तिरेव सहायो यस्य, ऐश्वर्यं पञ्चविधकृत्यकारित्वम् ॥ १३ ॥

**जयाक्रमसमाक्रान्तसमस्तभुवनत्रय ।**
**जयाविगीतमाबालगीयमानेश्वरध्वने ॥ १४ ॥**

जयाक्रमेति । साक्षाद्विभातत्वाद्युगपत्सदा सम्यगाक्रान्तं समस्तं निरवशेषं प्राग्वद्भुवनत्रयं येन, विष्णुना क्रमाभ्यां भूर्भुवः-

स्वराक्रान्तमधिष्ठितं भगवता त्वक्रममेव भवाभवातिभवत्रयं व्याप्तम् इति व्यतिरेकध्वनिः अविगीतमविप्रतिपत्ति कृत्वा आबालं गीयमानं ईश्वर इति ध्वनिः नादामर्शो यस्य ॥१४॥

जयानुकम्पानुगुणानपेक्षसहजोन्नते ।
जय भीष्ममहामृत्युघटनापूर्वभैरव ॥ १५ ॥

जयानुकम्पेति । अनुकम्पादिगुणानपेक्षा सहजा स्वाभाविकी अविच्छिन्ना उन्नतिर्माहात्म्यं यस्य, अन्येषां तु "यो हि यस्माद्गुणोत्कृष्टः स तस्मादूर्ध्वमुच्यते" इत्याम्नायस्थित्या अपूर्वैवोन्नतिः भीष्मस्य सकलजगत्कम्पकारिणो महामृत्योः घटने स्वरूपचलनात्मनि ग्रसने अपूर्वोऽपि भैरवः भीषणीयस्यापि भीषणीयः भीरूणां भयमिति तद्धितेन मृत्युभीतानां हृदि स्फुरन्नभयप्रदश्च ॥ १५ ॥

जय विश्वक्षयोच्चण्डक्रियानिष्परिपन्थिक ।
जय श्रेयःशतगुणानुग नामानुकीर्तन ॥१६॥

जय विश्वेति । विश्वक्षये संहारे उच्चण्डायां क्रियायां निर्गतः परिपन्थिको निरोद्धा यस्य, श्रेयांसः शतगुणा अनुगाः पश्चाद्धाविनः यस्य, तथाविधं नामानुकीर्तनं यस्य ॥ १६ ॥

जय हेलावितीर्णैतदमृताकरसागर ।
जय विश्वक्षयाक्षेपिक्षणकोपाशुशुक्षणे ॥१७॥

जय हेलेति । हेलया वितीर्णो भक्तेभ्यो दत्तः एतदिसेप श्रेयः शतगुणानुगः अमृताकरसागरो येन, उपमन्यवे क्षीरोदो वितीर्णः "येन विश्वक्षयाक्षेपिक्षणकोपाशुशुक्षणिः" क्षणिकोऽपि कोपाग्निर्यस्य ॥ १७ ॥



जय मोहान्धकारान्धजीवलोकैकदीपक ।
जय प्रसुप्तजगतीजागरूकाधिपूरुष ॥१८॥

जय मोहेति । मोहान्धकारेण अख्यातितिमिरेण अन्ध उपसंहृताभेददृष्टिर्यो जीवलोकस्तस्यैकः अद्वितीयो दीपः परमार्थप्रकाशकः, प्रकर्षेण सुप्तायां मायाप्रस्वापजडीकृतायां जगत्यां विश्वप्रजागरूको नित्यप्रबुद्धोऽतएवाधिपूरुषोधिष्ठातृस्वरूपः ॥ १८ ॥

जय देहाद्रिकुञ्जान्तर्निकूजज्जीव जीवक ।
जय सन्मानसव्योमविलासिवरसारस ॥१९॥

जय देहादीति । देह एव जडत्वादद्रिकुञ्जं पर्वतदरीगृहं तत्र निकूजतः क्रन्दतो जीवान् प्राणिनो जीवयति जीवतां लम्भयति यः पर्वतगुहायां च निकूजन्तो जीवजीवाख्याः पक्षिणो भवन्तीत्यनुरणनशक्त्या क्षिप्तोर्थोऽपि सतां भक्तानां मानसं चित्तमेव निर्मलत्वादिधर्मत्वाद्व्योम तत्र विलसत्तच्छीलः वरसारसः परमात्मराजहंसश्च शोभमानश्च व्योमचारी भवति ॥ १९ ॥

जय जाम्बूनदोदग्रधातूद्भवगिरीश्वर ।
जय पापिषु निन्दोल्कापातनोत्पातचन्द्रमाः ॥२०॥

जय जाम्बूनदेति । जाम्बूनदं कनकं तेन उदग्र ऊर्जितो धातूद्भवश्च रसधातुसम्भूतो गिरीश्वरो मेरुर्यस्य, तथा च अवधूतः येनामलस्फुरितेत्यादि, पापिष्वतिशयविलयशक्तिगोचरेषु निन्दैव विषमदशाहेतुत्वादुल्का विद्युत्, भगवद्विलयशक्तिपातेन हि पापिनो भगवन्तं निन्दन्ति, उत्पातने उत्पातचन्द्रमा इव अशुभसूचक इन्दुरिव इन्दुरूपेण नित्याह्लादहेतुत्वं सूच्यते ॥२०॥

जय कष्टतपःक्लिष्टमुनिदेवदुरासद ।
जय सर्वदशारूढभक्तिमल्लोकलोकित ॥२१॥

जय कष्टेति । कष्टतपः क्लिष्टत्वादेवागस्त्यब्रह्मादिभिर्दुःखेनासाध्यते, उक्तं हि प्राग्वत् न योगो न तप इति भक्तिरेव तत्रोपाय इत्याह सर्वासु जाग्रदादिदशास्वारूढेन प्राग्व्याख्यातेन भक्तिमल्लोकेन लोकित साक्षात्कृत ॥ २१ ॥

**जय स्वसम्पत्प्रसरपात्रीकृतनिजाश्रित ।**
**जय प्रपन्नजनतालालनैकप्रयोजन ॥२२॥**

जय स्वसम्पत्प्रसरेति । परमानन्दसारे स्वसम्पत्प्रसरे पात्रीकृतस्तदास्वादभाजनतां प्रापितः निजाश्रितो भक्तजनो येन, लालनं "तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्" इति स्थित्या योगक्षेमोद्वहः ॥ २२ ॥

**जय सर्गस्थितिध्वंसकारणैकावदानक ।**
**जय भक्तिमदालोललीलोत्पलमहोत्सव ॥२३॥**

जय सर्गस्थितीति । सृष्ट्यादिकारणं "सदा सृष्टिविनोदाय" इति न्यायेन एकमेवावदानमुत्तमं चरितं यस्य, भक्तिमदेन समावेशोद्रेकेण आलोला स्पृहणीया व्याप्ता च लीलापरिस्पंदो यस्य तथा भूतस्योत्पलस्यैतन्नाम्नः अस्मत्परमेष्ठिनो महोत्सवः ॥ २३ ॥

**जय जयभाजन जय जितजन्म–**
**जरामरण जय जगज्ज्येष्ठ ।**
**जय जय जय जय जय जय जय**
**जय जय जय जय जय जय त्र्यक्ष ॥२४॥**

जय जयेति । जयभाजनत्वं चिद्रूपत्वेन सर्वोत्तमत्वात् स्वात्मन एव चिद्रूपेश्वरस्य वस्तुतः सर्वोत्कर्षवृत्तेरपि स्वातन्त्र्येण



विषयव्यग्रतावस्थायां गूहितात्मत्वात्पराङ्मुखस्येव सम्मुखीकरणात्मकप्रार्थनारूपो जयेति, लोडर्थ इत्याद्वयनये ऐवोचित इत्याशयेनापि उक्तं जयभाजनेति, द्वयनये तु भेदमयत्वादेवेश्वरो न सर्वोत्कर्षेण वर्तते ततो जयेत्याशीर्व्यर्थैव, अथापि वर्तेत किं परक्तया प्रार्थनया विध्यादिश्च लोडर्थ ईश्वरविषयेऽनुचित एवेति भेदेन यज्जयेत्युदीरणमनुपपन्नमेव, जितानि जन्मजरामरणानि जयमाश्रित्येऽर्थः, जगज्ज्येष्ठता अनादित्वात् भूयो भूयो जय जयेत्युद्घोषणमुद्घोषयितुर्भक्तिसमावेशवैवश्यं सूचयति, त्र्यक्षेत्यामन्त्रणं निःसामान्योत्कर्षशालितां प्रकाशनायेति शिवम् ॥ २४ ॥

इति श्रीमदुत्पलदेवाचार्यविरचितस्तोत्रावलौ जयस्तोत्रे
श्रीक्षेमराजविरचिता विवृतिः ॥
तदेतैश्चतुर्दशभिरेकदेशैः सहजोन्मुद्रणानाम स्तोत्रम् ॥१४॥

—:o:—



ॐ तत्सत्

त्रिमलक्षालिनो ग्रन्थाः सन्ति तत्पारगास्तथा ।
योगिनः पण्डिताः स्वस्थास्त्वद्भक्ता एव तत्वतः ॥१॥

त्रिमलेति । त्रीन् आणवमायीयकार्ममलान् क्षालयन्ति ये ते ज्ञानक्रियायोगचर्यापदरूपा, ग्रन्थाः पारमेश्वराः, तथा तत्पारगास्तेषामाद्यन्तदर्शिनो व्याख्यात्रादयोऽपि, सन्ति सत्यतः पुनस्त्वद्भक्ता एव तत्पारगाः यतस्त एव तत्वतो योगिनः पण्डिताःस्वस्थाश्च तत्पारगाः तत्वत इति चावृत्या योज्यं, तत्र "योगमेकत्वमिच्छन्ति" इति "मय्यावेश्य मनो ये माम्" इत्यादि योगिनो नित्यसमावेशयुक्ताः प्रशंसायां नित्ययोगे चेनिः अनेन योगपादरहस्यनिष्ठत्वमेषामुक्तम्, पण्डितत्वं विद्यापादक्रियापाद सतत्वरूढिः तत्र विद्यापादेन 'ज्ञायतेऽनेनेति' व्युत्पत्त्या उपायात्मकं परशक्तिशिवस्वरूपं ज्ञानमेकं ज्ञप्तिज्ञानमिति व्युत्पत्त्योपेयात्मकं चिदानन्दघनस्वरूपं विश्रान्तिसतत्वं द्वितीयमभिधीयते, क्रियापादेनापि वीर्यसारमन्त्रतन्त्रतदिति कर्तव्यताद्युपायरूपा तदुपायक्रमावाप्तस्वात्मविमर्शसारा च क्रियाऽभिधीयते, तन्त्रमन्त्राणां समस्तवाच्यवाचकभेदामर्शसारपरमानन्दघनशब्दराशिसतत्वमहं विमर्शसारं परं वीर्यम्, एतदभिन्नस्फुरतामयी च महासामान्यस्पन्दरूपा प्रतिभात्मा विमर्शशक्तिः सृष्टिसंहारप्रधानपरवीर्यम्; अपरं तु विश्लेषणादियुक्तिवशस्फुरिततत्तद्ध्येयदेवताकाराभेदप्रतिपत्तिः मुद्रणा तत्तत्संवित्सारतैव हृदयं कुण्डमण्डलेतिकर्तव्यतादेरपि परमेशज्ञानक्रियाशक्तिव्याप्तिरेव तत्त्वम्, एवं विद्यापरमार्थसतत्वविश्रान्तिपाण्डित्यम्, स्वस्थत्वं तु चर्यापादाभिधेयोक्तं करणोन्मीलननिमीलनक्रमेणैव परमेश्वरवत्सततं



सृष्टिसंहारादिकारि स्वस्वरूपावस्थितत्वम्, एतच्च सर्वं त्वद्भक्तानामेव तत्वतोऽस्तीत्यलम् ॥ १ ॥

मायीयकालनियतिरागाद्याहारतर्पिताः ।
भवन्ति सुखिनो नाथ भक्तिमन्तो जगत्तटे ॥२॥

मायीयेति । कालादीनां पञ्चानां ग्रसनेन तर्पितत्वं तत्प्रातिपक्ष्येण यदकालकलितव्यापकनिराकाङ्क्षसर्वकर्तृसर्वज्ञस्वस्वरूपप्राप्तिः, सुखिन आनन्दघनास्तृप्ताश्च सुखसञ्चारिणो भवन्ति ॥ २ ॥

रुदन्तो वा हसन्तो वा त्वामुच्चैः प्रलपन्त्यमी ।
भक्ताः स्तुतिपदोच्चारोपचाराः पृथगेव ते ॥३॥

रुदन्त इति । अमी इति समावेशशालिनो भक्ता, रुदन्तो वा हसन्तो वेति सर्वावस्थावर्त्तिनस्त्वामुच्चैरुत्कृष्टतया प्रलपन्ति स्फुटं विमृशन्ति, अमी एव सत्यतो भक्ताः, स्तुतिपदोच्चार एवोपचारः सेवाप्रकार उपरञ्जनप्रकारो येषां ते, पृथगेव भक्ता जनेभ्यो बाह्या एवेत्यर्थः ॥ ३ ॥

न विरक्तो न चापीशो मोक्षाकाङ्क्षी त्वदर्चकः ।
भवेयमपि तूद्रिक्तभक्त्यासवरसोन्मदः ॥ ४ ॥

विरक्तो निवृत्तिधर्म्मा ईशो वा विभूतियुक्तः सन् ।
निजनिजेनौचित्येन त्वदर्चको मोक्षमाकांक्षन्॥५॥

नेति । विरक्तः निवृत्तिधर्मा, ईशो विभूतियुक्तः, निजनिजेनौचित्येन त्वदर्चको मोक्षमाकाङ्क्षन् न तु जीवन्मुक्तः न भवेयं मा भूवमित्यर्थः, अपि तु उद्रिक्तेन ऊर्जितेन भक्त्यासवरसेन समावेशचमत्कृतिप्रकर्षेणोन्मद उद्भूतानन्दो भवेयम् ॥४॥५॥

बाह्यं हृदय एवान्तरभिहृत्यैव योऽर्चति ।
त्वामीश भक्तिपीयूषरसपूरैर्नमामि तम् ॥६॥

बाह्यमिति । हृदय एव प्रकाशपरामर्शात्मनि स्वरूप एवान्तर्मध्ये विश्वं बाह्यमभिहृत्य समन्तात्स्वीकृत्यैव न तु किञ्चिदवशेष्य, हे ईश स्वामिन्, यस्त्वां भक्तिरेव परमाह्लादविकासहेतुत्वात्पीयूषपूरास्तैरर्चति, तं भक्तिशालिनं नमामीति पूर्ववत् ॥६॥

धर्माधर्मात्मनोरन्तः क्रिययोर्ज्ञानयोस्तथा ।
सुखदुःखात्मनोर्भक्ताः किमप्यास्वादयन्त्यहो ॥७॥

धर्मेति । लोके शुभाशुभरूपतया प्रसिद्धत्वेन धर्माधर्मत्वं न तु भक्तिमद्भिस्तथाऽनुष्ठीयमानत्वात्, अन्तरिति मध्ये स्थिता, अपि किमपीति असामान्यपरमानन्दकरूपम् ॥ ७ ॥

चराचरपितः स्वामिन् अप्यन्धा अपि कुष्ठिनः ।
शोभन्ते परमुद्दामभवद्भक्तिविभूषणाः ॥ ८ ॥

चराचरेति । अप्यन्धा अपि, कुष्ठिन इति, लोकेऽत्यन्तं गर्हिता अपीत्यर्थः ॥ ८ ॥

शिलोञ्छपिच्छकशिपुविच्छायाङ्गा अपि प्रभो ।
भवद्भक्तिमहोष्माणो राजराजमपीशते ॥९॥

शिलोञ्छेति । शिलोञ्छमुञ्छितं शिलं पिच्छं पक्षः कशिपुः भोजने आच्छादने शिलोञ्छपिच्छे एव कशिपुस्तेन विच्छायान्यङ्गानि येषां ते, एवमतिकृशवृत्तयोऽपि यतो भवद्भक्त्या महोष्माणः अतिदीप्तोर्जितस्वरूपास्ततो राजराजं वैश्रवणमीशते ऐश्वर्येणाभिभवन्तीत्यर्थः ॥ ९ ॥



सुधार्द्रायां भवद्भक्तौ लुठताप्यारुरुक्षुणा ।
चेतसैव विभोऽर्चन्ति केचित्त्वामभितः स्थिताः ॥१०॥

सुधार्द्रायामिति । सुधा परमानन्दरसः, आर्द्रा सिक्ता, भक्तिसमावेशः तत्र, लुठता सम्यक् तत्पादानाक्रमात्स्थितिं जहताऽपि, आरुरुक्षुणा अकृतकावष्टम्भजिघृक्षुणा, चेतसैव न तु बाह्येन कुसुमादिना केचिदिति, परमयोगिनः त्वामभितः स्थिता अन्तर्बहिश्च सर्वत्र त्वय्येव विश्रान्ताः ॥ १० ॥

रक्षणीयं वर्धनीयं बहुमान्यमिदं प्रभो ।
संसारदुर्गतिहरं भवद्भक्तिमहाधनम् ॥ ११ ॥

रक्षणीयमिति । रक्षणं व्युत्थानेनानपहारः, वर्धनं क्रमात्क्रममन्तरमनुप्रवेशे स्फीततापादनम्, बहुमानः सर्वोत्कृष्टतयाऽऽदरः ॥ ११ ॥

नाथ ते भक्तजनता यद्यपि त्वयि रागिणी ।
तथापीर्ष्यां विहायास्यास्तुष्टाऽस्तु स्वामिनी सदा १२

नाथेति । भक्तजनता रागिणी नायिकेव ईर्ष्यात्यागः अवदानं, तुष्टा विकसिता, स्वामिनी परशक्तिरिति प्रकृते अप्रकृते तु स्वामिनी महादेवी ॥ १२ ॥

भवद्भावः पुरो भावी प्राप्ते त्वद्भक्तिसम्भवे ।
लब्धे दुग्धमहाकुम्भे हता दधनि गृध्नुता ॥ १३॥

भवद्भाव इति । भक्तिसम्भवे त्वत्समावेशे, भवद्भावः पुरो भावी त्वद्रूपता समासन्नैव, न तु प्रार्थनीया, यतो महति क्षीरघटे प्राप्ते दध्नि या गृध्नुता अभिलाषुकता सा हता व्यर्थैव, दुग्धेनैव दध्नो गर्भीकारात् ॥ १३॥

किमियं न सिद्धिरतुला
किंवा मुख्यं न सौख्यमास्रवति ।
भक्तिरुपचीयमाना
येयं शम्भोः सदातनी भवति ॥१४॥

किमिति । शम्भोर्भक्तिरुपचीयमाना परां धारां प्राप्यमाणा या सदातनी भवति पराभक्तिरूपतामासादयति, किं नेयमतुला सिद्धिरपि त्वतुलैव परैव भक्तिः, मुख्यं सौख्यं परमानन्दं, वा किं न आसमन्तात्स्रवति स्रवत्येवेत्यर्थः ॥ १४ ॥

मनसि मलिने मदीये
मग्ना त्वद्भक्तिमणिलता कष्टम् ।
न निजानपि तनुते तान्
अपौरुषेयान्स्वसम्पदुल्लासान् ॥१५॥

मनसीति । मलिने व्युत्थानकलङ्किते मग्ना व्युत्थानाच्छादिता त्वद्भक्तिरेव मणिलता सर्वसिद्धिप्रसूः रत्नशाखाः निजान् सहजान् तानिति समावेशेन स्फुरितान् अलौकिकान् सर्वाकाङ्क्षापरिहारिपरमानन्दमयान् नमिताणिमादिरूपान् किमिव न सिद्धिरतुलेतीदानीमेवोक्तत्वात् ॥ १५ ॥

भक्तिर्भगवति भवति
त्रिलोकनाथेन नूत्तमासिद्धिः ।
किन्त्वणिमादिकविरहात्
सैव न पूर्णेति नास्ति चिन्ता मे ॥१६॥ *

* आदर्शपुस्तकेऽस्य श्लोकस्य टीका नोपलभ्यते ।



बाह्यतोऽन्तरपि चोत्कटोन्मिष-
त्त्र्यम्बकस्तवकसौरभाः शुभाः ।
वासयन्त्यपिविरुद्धवासनान्
योगिनो निकटवासिनोऽखिलान् ॥१७॥

भक्तिरिति । उत्कटमतिदीप्तम्, उन्मिषत उल्लसतः त्र्यम्बकस्तवकस्य शिवकुसुमगुच्छस्य सम्बन्धि सौरभमामोदो येषां योगिनां ते शुभाः बहिरन्तश्च पूजनेनाधिवासिताः विरुद्धवासनान् अनाश्वस्तानपि अखिलान्निकटवासिनो जनान् वासयन्ति तु भवत्पूजोन्मुखान् सम्पादयन्ति बाह्ये त्र्यम्बकार्थं स्तवकः अन्तस्तु त्र्यम्बक एव स्तवक एवं सौरभमामोदश्चमत्कारश्च अथ च उत्कटेन त्र्यम्बकस्तवकस्य धत्तूरकस्य सौरभेणाधिवासिताः निकटस्थान्विभिन्नामोदानपि वाटम्र्चयन्तीति अनुरणनव्यङ्ग्योऽर्थः ॥१६।१७

ज्योतिरस्ति कथयाऽपि न किं-
चिद्विश्वमप्यतिसुषुप्तमशेषम् ।
यत्र नाथ शिवरात्रिपदेऽस्मि-
न्नित्यमर्चयति भक्तजनस्त्वाम् ॥१८॥

ज्योतिरिति । ज्योतिर्बाह्यान्तरजं ज्ञानं यत्र नाम्ना किञ्चिन्नास्ति समस्तमायीयप्रथायाः संहरणाद्विश्वमपि सकलमतिसुप्तम्, अत्र शिवरात्रिपदे शिवसमावेशभूमौ समस्ताख्यातिप्रथायाः संहरणाद्रात्रिरिव रात्रिस्तस्याः पदे स्थाने ॥ १८ ॥

सत्त्वं सत्यगुणे शिवे भगवति स्फारीभवत्वर्चने
चूडायां विलसन्तु शम्भुचरणप्रोच्छद्रजःसञ्चयाः ।

रागादिस्मृतिवासनामपि समुच्छेत्तुं तमो जृम्भताम्
शम्भो मे भवतात्त्वदात्मविलये त्रैलोक्यवर्गोथवा १९

सत्वमिति । सत्वाः पारमार्थिकाः सर्वज्ञत्वादयो गुणा यस्य, तत्र शिवे भगवति यदर्चनं चिद्विश्रान्तिपरमार्थस्वरूपं तत्र सत्वं प्रकाशः स्फारीभवतु । चूडायां मध्यशिखायां शिवशक्त्युदिताः रजः प्रकाशप्रवृत्तिनियमार्था इति सत्त्वरजस्तमःप्रसराः, किरणनिकराः स्वरूपोन्मीलकाः विकसन्तु । तनुश्चाख्यात्मा मोहः रागादिस्मृतिहेतुं वासनामपि सम्यगुच्छेत्तुमपुनर्भवाय जृम्भताम् । अथवा त्रैगुण्यवतस्त्वदात्मनि यो विलयः निःशेषमुपशान्तिस्तत्र भवताद् त्वय्येव विलीनो भूयादित्यर्थः ॥१९॥

संसाराध्वा सुदूरः खरतरविविध-
व्याधिदग्धाङ्गयष्टिः
भोगानेवोपभुक्ता यदपि सुखमभू-
ज्जातु तन्नो चिराय।
इत्थं व्यर्थोऽस्मि जातः शशिधरचरणा-
क्रान्तिकान्तोत्तमाङ्ग-
स्त्वद्भक्तश्चेति तन्मे कुरु सपदि महा-
सम्पदो दीर्घदीर्घाः ॥ २० ॥

संसारेति । सुदूरः कृच्छ्रप्राप्यपर्यन्तः, भोगा इति उत्तमा इह विवक्षिताः, जातु कदाचिन्नो निषेधे, अस्मीति देहादिप्रमातृरूपः, यतस्तु शशिधरचरणाक्रान्त्या ईश्वरशक्तिपातेन कान्तं दीप्तं संवित्प्रधानम्, अत एवोत्तमाङ्गं स्वरूपं यस्य त्वद्भक्त-



श्चेति । तथा भूतोऽपि त्वामेव सेवमानः तस्मान्मे दीर्घदीर्घाः शाश्वतीर्महासम्पदः प्राग्वदद्वयमयीः कुर्विति शिवम् ॥ २९ ॥

इति श्रीमदुत्पलदेवाचार्यविरचितस्तोत्रावलौ भक्तिस्तोत्रनामनि
पञ्चदशे स्तोत्रे श्रीमद्राजानकक्षेमराजाचार्य-
विरचिता विवृतिः ॥१५॥

ॐ न किञ्चिदेव लोकानां भवदावरणं प्रति ।
न किञ्चिदेव भक्तानां भवदावरणं प्रति ॥ १ ॥

न किञ्चिदिति । भवदावरणं प्रति चिन्मयत्वत्स्वरूपावरणाय लोकानां संसारिणां न किञ्चिदेव काक्वा अपि तु सर्वमेव भेदेन विश्वमेव पर्यन्तसमस्तशक्तिचक्रव्यवहितत्वात्, भक्तानां तु न किञ्चिदेव नैव किञ्चिदित्यर्थः शिवतत्त्वपर्यन्तस्याशेषस्य स्वाङ्गकल्पनया प्रमेयीकृतत्वात् ॥ १ ॥

अप्युपायक्रमप्राप्यः सङ्कुलोऽपि विशेषणैः ।
भक्तिभाजां भवानात्मा सकृच्छुद्धोऽवभासते ॥ २ ॥

अप्युपायेति । उपायक्रमस्तत्तच्छास्त्रोक्तज्ञानक्रियायोगचर्यादिर्विशेषणैः सर्वज्ञत्वसर्वकर्तृत्वसर्वशक्तिमयादिभिरसंख्यैः, यथोक्तमपि "सर्गसिद्धिवाचः क्षयेरन्" इत्यादि च, तथाभूतानां शक्तिभाजां सकृत्सन्ततं शुद्धचिदेकपरमार्थोऽवभासते, समावेशेन स्फुरति यश्च क्रमप्राप्यः सङ्कुलश्च स कथं सकृच्छुद्धश्च भातीति विरोधाभासः ॥ २ ॥

जयन्तोऽपि हसन्त्येते जिता अपि हसन्ति च
भवद्भक्तिसुधापानमत्ताः केप्येव ये विभो ॥ ३ ॥

जयन्तोऽपीति । जयन्त इति भेदानास्पदीकरणेन समाविशन्तः, हसन्ति विकसन्ति, जिता अपीति, व्युत्थानेवाकृष्यमाणा अपि समावेशसंस्काराद्बहिश्च विकसन्ति लौकजयपराजययोर्हसन्त्येव मत्ता हृष्टा अथ च ये मत्ताः क्षीवास्ते जयपराजययोर्हसन्तो भवन्ति केपीत्यलौकिकाः ॥ ३ ॥

शुष्ककं मैव सिद्धेय मैव मुच्येय वाऽपि तु ।
स्वादिष्ठपरकाष्ठाप्तत्वद्भक्तिरसनिर्भरः ॥ ४ ॥



शुष्ककमिति । शुष्कमेव शुष्ककं क्रियाविशेषणं, शुष्ककं भक्तिसमावेशरहितं कृत्वा तादृशौ भोगमोक्षौ भेदवादिनां स्वादिष्टौ निरतिशयचमत्कारो धारादिरूढश्च, यस्त्वत्समावेशरसः तेन निर्भरं पूर्णं कृत्वा अत एव शुष्कतानिवृत्तिः ॥ ४ ॥

यथैवाज्ञातपूर्वोऽयं भवद्भक्तिरसो मम ।
घटितस्तद्वदीशान स एव परिपुष्यतु ॥ ५ ॥

यथैवेति । अज्ञातपूर्व इति, जन्मकोटिमध्येऽप्यविदित अयमिति स्फुरद्रूपः भक्तिरसः समावेशप्रसरः, ईशान स्वतन्त्र तद्वदिति, झटित्यज्ञातपूर्वः यथैवेति, यं प्रकारं त्वमेव जानासीत्यर्थः ॥ ५ ॥

सत्येन भगवन्नान्यः प्रार्थनाप्रसरोऽस्ति मे ।
केवलं स तथा कोऽपि भक्त्यावेशोऽस्तु मे सदा ॥ ६

सत्येनेति । अतिप्रणयपरिचयादियमुक्तिः । अन्य इति, प्रार्थनातो व्यतिरिक्तः स तथा कोऽपीति, वाग्विकल्पातीतः भक्त्यावेशः समावेशकैवल्यम् ॥ ६ ॥

भक्तिक्षीवोऽपि कुप्येयं भवायानुशयीय च ।
तथा हसेयं रुद्यां च रटेयं च शिवेत्यलम् ॥ ७ ॥

भक्तीति । भवाय संसाराय कुप्येयं ग्राम्यत्वेन संसारमवलोकयेयमित्यर्थः, अनुशयीयेति, कथमियन्तं कालं व्यामूढ आसमिति पश्चात्तापमनुभवेयम्, हसेयं प्रमोदेन विकसेयम्, रुद्यां आनन्दाश्रुप्लुतः स्याम्, रटेयमिति शिव शिवेति मुखरः स्याम्, क्षीवस्येव मे नानावृत्त्युदयो भवतु ॥ ७ ॥

विषमस्थोऽपि सुस्थोऽपि रुदन्नपि हसन्नपि ।
गभीरोऽपि विचित्तोऽपि भवेयं भक्तितः प्रभो ॥ ८ ॥

विषमस्थ इति । विषमस्थोऽपि दौर्गत्योपहतोऽपि, भक्तितः स्वानन्दविश्रान्तः, सूचीपुञ्जोपविष्ट इव लौकिकं सुखं दुःखरूपेण पश्यन्, तथा बान्धवमरणाद्यवस्थायां रुदन्नपि तथा अन्तश्चिद्रिकासलाभात्प्रहृष्यन्, तथा सांसारिकप्रमोदेषु तथा हसन्नपि रुदन् शोचनीयतां मन्यमानस्तथा लौकिकव्यवहारे गभीरोऽपि परैरनालक्ष्योऽपि विचित्तः तां दशामुत्पातमिव मन्यमानस्तथा विचित्तोऽपि क्वचन सन्निपाताद्यवसरे नष्टस्मृतिरपि गभीरः परैरालोचितोप्यन्तर्दशाव्याप्तिप्रमोदनिर्भरः स्याम् ॥ ८ ॥

**भक्तानां नास्ति संवेद्यं त्वदन्तर्यदि वा बहिः ।**
**चिद्धर्मा यत्र न भवान्निर्विकल्पः स्थितः स्वयम् ॥ ९ ॥**

भक्तानामिति । संवेद्यं संसारलीलादि, चिद्धर्मा चित्स्वयमिति साक्षात्स्फुरन् नान्याधिष्ठानेन ॥ ९ ॥

**भक्ता निन्दानुकारेऽपि तवामृतकणैरिव ।**
**हृष्यन्त्येवान्तरा विद्धास्तीक्ष्णारोमाञ्चसूचिभिः ॥ १० ॥**

भक्ता इति । तव निन्दानुकारेऽपि उपहतजन्तूपकल्पप्रामप्रशंसामनुकुर्वन्तो भक्ता हृष्यन्त्येव, स्फुरत्सात्त्विकरूपाः परमानन्दव्याप्तिं लभन्त एव अत एव पाशनिर्भेदिनीभिस्तीक्ष्णाभी रोमाञ्चसूचिभिरासमन्ताद्विद्धाः ॥ १० ॥

**दुःखापि वेदना भक्तिमतां भोगाय कल्पते ।**
**येषां सुधार्द्रा सर्वैव संवित्त्वच्चन्द्रिकामयी ॥ ११ ॥**

दुःखापीति । वेदना संवित्, दुःखापि दुःखकारिण्यपि, भोगायेति दुःखस्य चमत्कार्यत्वाच्चमत्कर्तृतासारानन्दघनप्रमातृपदवित्तये तत एवाहं सर्वैव संवित् चितिशक्तिः, येषां सुधार्द्रा परमानन्दघनत्वाच्चन्द्रिकामयी पराशक्तिरूपा ॥ ११ ॥



**यत्र तत्रोपरुद्धानां भक्तानां बहिरन्तरे ।**
**निर्व्याजं त्वद्वपुःस्पर्शरसास्वादसुखं समम् ॥ १२ ॥**

यत्रेति । सुखदुःखतद्धेत्वादिरूपे उपरुद्धानामवस्थितानां भक्तानां निर्व्याजमन्तर्विचित्रवासनाकालुष्यशून्यं त्वद्वपुश्चिन्मयत्वात्तत्स्वरूपस्य संबन्धि यत्स्पर्शरसास्वादसुखं तत्समं सर्वतुल्यं, उक्तं च "समबुद्धिर्विशिष्यते" इति ॥ १२ ॥

**तवेश भक्तेरर्चायां दैन्यांशं द्वयसंश्रयम् ।**
**विलुप्यास्वादयन्त्येके वपुरच्छं सुधामयम् ॥ १३ ॥**

तवेति । तवार्चायां प्राग्व्याख्यातायां या भक्तिः सेवा तस्याः द्वयसंश्रयं भेदसम्बद्धं दैन्यांशं दीनतालेशमपि विलुप्य छित्त्वा एके केचिदेव भेदविगलनादच्छं निर्मलं तद्वदेव सुधामयमानन्दरससारं वपुरास्वादयन्ति चमत्कुर्वन्ति दैन्यांशमिति । अत्रायमाशयः द्वैतभक्तेरद्वैतभक्तिः सद्यः समावेशमयी द्वैतभक्तिस्त्वतथात्वाच्छिववताऽऽकाङ्क्षामयी ॥ १३ ॥

**भ्रान्तास्तीर्थदृशो भिन्ना भ्रान्तेरेव हि भिन्नता ।**
**निष्प्रतिद्वन्द्वि वस्त्वेकं भक्तानां त्वं तु राजसे ॥ १४ ॥**

भ्रान्ता इति । तीर्थदृशः शास्त्रदृष्टयो यतो भ्रान्तास्ततो भिन्नाः, यस्माद्भिन्नता नाम भ्रान्तेरैक्याख्यातेर्हेतुर्भवति न तु वस्तुतः, भक्तानां तत्त्वमेकमद्वितीयं वस्तुतत्वं निष्प्रतिद्वन्द्वित्वान्निर्द्वन्द्वं राजसे दीप्यसे ॥ १४ ॥

**मानावमानरागादिनिष्पाकविमलं मनः ।**
**यस्यासौ भक्तिमाँल्लोकस्तुल्यशीलः कथं भवेत् ॥ १५ ॥**

मानावमानेति । यस्य भक्तिमतो मानावमानयोः रागादीनां

च यो निष्पाकः निःशेषेण पचनं दग्धबीजकल्पतापादनं, तेन हेतुना मनः स्वान्तं विमलमकलङ्कम् ॥ १५ ॥

रागद्वेषान्धकारोऽपि येषां भक्तित्विषा जितः ।
तेषां महीयसामग्रे कतमे ज्ञानशालिनः ॥१६॥

रागेति । महीयसामिति, ईयसुनोऽयमाशयः समव्याप्तिकत्वं ज्ञानिनां भक्तानां च, तत्र भक्तानां तु रागद्वेषान्धकारस्य जयाद्विशेषः ॥ १६ ॥

यस्य भक्तिसुधास्नानपानादिविधिसाधनं ।
तस्य प्रारब्धमध्यान्तदशासूच्चैःसुखासिका॥१७॥

यस्येति । भक्तिरेव सुधा अमृतं सा यस्य स्नानपानादिविधेः शुद्धतृप्त्यादिफलस्य व्यापारग्रामस्य साधनं, प्रारब्धमध्यान्तदशासु, आदौ मध्ये चान्ते चार्थात्सर्वव्यापाराणामुच्चैः सुखासिका परमानन्दविश्रान्तित्वम् ॥ १७ ॥

कीर्त्यश्चिन्तापदं मृग्यः पूज्यो येन त्वमेव तत् ।
भवद्भक्तिमतां श्लाघ्या लोकयात्रा भवन्मयी॥१८॥

कीर्त्य इति । येनेति हेतौ उदिति तस्माल्लोकयात्रा च कीर्तनादिमती च ॥ १८ ॥

मुक्तिसंज्ञा विपक्कायाः भक्तेरेव त्वयि प्रभो ।
तस्यामाद्यदशारूढा मुक्तकल्पा वयं ततः ॥१९॥

मुक्तिरिति । विपक्कायाः परंपरिपूर्णायाः, आद्यदशारूढेति उत्तरोत्तरप्रकर्षसाधनायोद्युक्ता अपि प्रथमभूमिकायां लब्धस्थितयः मुक्तकल्पा इति मनाङ्मात्रेण सम्पूर्णमुक्तयो न तु मुक्ताः॥१९॥



दुःखागमोऽपि भूयान्मे त्वद्भक्तिभरितात्मनः ।
त्वत्पराची विभो माभूदपि सौख्यपरम्परा ॥२०॥

दुःखागम इति । त्वत्पराची त्वत्पराङ्मुखी ॥ २० ॥

त्वं भक्त्या प्रीयसे भक्तिः प्रीते त्वयि च नाथ यत् ।
तदन्योन्याश्रयं युक्तं यथा वेत्थ त्वमेव तत् ॥२१॥

त्वमिति । यावन्न परमेश्वरः प्रीयते न तावद्भक्तिः यावच्च समावेशमयी भक्तिः न तावत्परमेश्वरः प्रीयते, भक्तिमतश्चिदानन्दमयं वपुः प्रकटयति, तदेतदन्योन्याश्रयं यथा येन प्रकारेण यथा युक्तं भवति तथा त्वमेव अतिदुर्घटकारिणः स्वातन्त्र्याद्भयं घटयसि न त्वत्र पुरुषयुक्तयः प्रभवन्ति ॥ २१ ॥

साकारो वा निराकारो वान्तर्वा बहिरेव वा ।
भक्तिमत्तात्मनां नाथ सर्वथाऽसि सुधामयः ॥२२॥

साकारइति । भक्त्या मत्तः प्रहृष्ट आत्मा येषां तेषां, सर्वत्र त्वं सुधामयः ते हि सर्वात्मत्वेन पश्यन्ति ॥ २२ ॥

अस्मिन्नेव जगत्यन्तर्भवद्भक्तिमतः प्रति ।
हर्षः प्रकाशनफलमन्यदेव जगत्स्थितम् ॥२३॥

अस्मिन्निति । सर्वजनातिघोरे तेन आपातमात्रे यद्यपि भक्तिमतां लोकवदेव जगद्भाति तथाऽपि मृग्यमानमेतदेषां प्रकाशानन्दघनमेव ॥ २३ ॥

गुह्ये भक्तिः परे भक्तिर्भक्तिर्विश्वमहेश्वरे ।
त्वयि शम्भो शिवे देव भक्तिर्नाम किमप्यहो॥२४॥

गुह्ये इति । गुह्ये रहस्यरूपे, परे पूर्णे, असाधारणनामोदीरणं निरतिशयताख्यापनाय किमिप्यसामान्यं वस्तु ॥ २४ ॥

भक्तिर्भक्तिः परे भक्तिर्भक्तिर्नाम समुत्कटा ।
तारं विरौमि यत्तीव्रा भक्तिर्मेऽस्तु परं त्वयि ॥२५॥

भक्तिरिति । वीप्सायामेव वैवश्यं प्रथयति, परं तीव्रा धारारूढा समुत्कटा अभ्यासाद्यनपेक्षं प्रदीप्ताग्निज्वालावज्झटित्युल्लसन्ती, युक्तं चैतत् ॥ २५ ॥

यतोऽसि सर्वशोभानां प्रसवानिरीश यत् ।
त्वयि लग्नमनर्घं स्याद्रत्नं वा यदि वा तृणम् ॥२६॥

यतोऽसीति । असि त्वं यतः सर्वासां शोभानां दीप्तानाञ्च प्रसवभूः अतो लोकापेक्षया यद्रत्नमिति जात्युत्कृष्टं तृणं वेत्यनुपादेयं वा, तत्त्वयि चेल्लग्नं समावेशेन सम्बद्धं, तदनर्घमेव भवति॥२६॥

आवेदकादाचवेद्याद्येषां संवेदनाध्वनि ।
भवता न वियोगोऽस्ति ते जयन्ति भवज्जुषः॥२७॥

आवेदेति। संवेदनाध्वनि संविन्मये वेद्यवेदकक्षोभेऽपि येषां त्वया न वियोगः ते भवन्तं प्रीत्या सेवमाना जयंति ॥ २७ ॥

संसारसदसो बाह्ये कैश्चित्त्वं परिरभ्यसे ।
स्वामिन्परैस्तु तत्रैव ताम्यद्भिस्त्यक्तयन्त्रणैः॥२८॥

संसारेति । संसारसदसो बाह्ये संसारसभामुल्लङ्घ्य, नियत एव पदे, कैश्चिदिति द्वादशान्तादिपदस्थैः निमीलनसमाधिपरैर्योगिभिः, परिरभ्यसे समालिङ्ग्यसे, परैरनुभावतो युक्तितत्वज्ञतयोन्मीलनसमाधानविदग्धैः, पुनस्तत्रैव संसारसभामध्ये एव त्यक्तयन्त्रणैः परिहृतध्यानोच्चारकरणाद्यायासैः ताम्यद्भिर्गाढानुरागविवशैः गाढानुरागिणां हीदृश्येव स्थितिः ॥ २८ ॥



पानाशनप्रसाधन-
सम्भुक्तसमस्तविश्वया शिवया ।
प्रलयोत्सवसरभसया
दृढमुपगूढं शिवं वन्दे ॥ २९ ॥

पानाशनेति । शिवया दृढमुपगूढं आश्लिष्टं, शिवं चिद्भैरवं, वन्दे नौमि समाविशामीति यावत्, कीदृश्या पानाशनप्रसाधनसम्भुक्तसमस्तविश्वया, पानेन रक्षणेन स्थित्या, अशनेन कवलीकारात्मना संहारेण, प्रसाधनेन प्रकर्षेण सिद्धिसम्पदादिना सर्गेण च, सम्यक् भुक्तं पालितमभ्यवहृतं च, तथा समस्तं सम्यक् क्षिप्तं विश्वं यया तुर्यरूपया श्रेयःस्वभावया शिवया अत एव प्रलयोत्सवेन संसृष्टिस्थितिसंहाराणामपि संहरणात्मनाऽभ्युदयेन सरभसया सातिशयं स्फारयन्त्या तथा पानेन साराहरणेन, अशनेन अवशिष्टशल्कप्रायवस्तुभक्षणेन, प्रसाधनेनैतदवशिष्टं समस्तं संस्कारशेषमपि विश्वं यथा अत एव विश्वस्य प्रलयोत्सवे सरभसया सत्वरया बाह्यक्रमेणापि तक्रादेः पानेन, मांसादेरशनेन, अस्थ्यादेः प्रसाधनेन भूषणताकरणेन, सम्भुक्तं स्वोपयोगपात्रीकृतं, सम्यगस्तं चात्मन्येव क्षिप्तं समस्तं च षट्त्रिंशत्तत्वमयं विश्वं यया, प्रलयोत्सवे कल्पितसंहर्तृपदप्रलीनतापादनक्रीडायां सरभसया प्रोद्युक्तया अनुरणनशक्त्याऽपि पानचर्वणमण्डनैः संभुक्तं सम्भोग्यतां नीतं, समस्तं विभवरूपं विश्वं यया सुन्दर्या सा लयोत्सवे उभयानन्दसमापत्त्यात्मनि सरभसा सती शक्तिमन्तमाश्लिष्यन्ती भवति ॥ २९ ॥

परमेश्वरता जयत्यपूर्वा
तव विश्वेश यदीशितव्यशून्या ।



अपराऽपि तथैव ते ययेदं
जगदाभाति यथा तथा न भाति ॥ ३० ॥

परमेश्वरेति । हे विश्वेश, तव अपूर्वा परमा प्रकृष्टा परमशिवरूपा, ईश्वरता जयति यद्यस्मादियमीशितव्येन भिन्नेन ईशानीयेन वस्तुना शून्या स्वात्मसात्कृताशेषविश्वत्वात्, अपराऽपि परमशिवापेक्षया स्थूलाऽपि सदाशिवेश्वररूपा तव सम्बन्धिनीश्वरता तथैवेति अपूर्वा जयति इत्यर्थः, ययेदं जगद्यथेति-नीलसुखादिदेहादिभेदेन आभाति तथा तेनैव प्रकारेण भासमानं सत् अहन्ताप्रकाशसमरसीभूतत्वादेवमात्मन्यसङ्कल्पाः प्रकाशस्यैव सन्त्यमी जडाः प्रकाश एवास्ति स्वात्मनः स्वपरात्मभिरितिस्थित्या भातीत्यर्थः ॥ ३० ॥ इति शिवम् ॥

इति श्रीमदुत्पलदेवाचार्यविरचितस्तोत्रावलौ
पाशानुद्भेदनामनि षोडशे स्तोत्रे श्रीक्षेमराज-
विरचिता विवृतिः ॥

---



ॐ तत्सत् । अहो कोऽपि जयत्येष स्वादुपूजामहोत्सवः ।
यतोऽमृतरसास्वादमश्रूण्यपि ददत्यलम् ॥ १ ॥

ॐ अहो इति । एष इत्यनुभवसाक्षिकः, स्वादुरानन्दमयः, कोऽपीति समावेशात्मा पूजोत्सवो जयति यतः पूजामहोत्सवादश्रूणि बाष्पा अपि अमृतास्वादमलं ददति आनन्दप्रभवाच्चमत्कारमेव पुष्णन्ति ॥ १ ॥

व्यापाराः सिद्धिदाः सर्वे ये त्वत्पूजापुरःसराः ।
भक्तानां त्वन्मयाः सर्वे स्वयं सिद्धय एव ते ॥२॥

व्यापारा इति । ये त्वत्पूजोपक्रमव्यापारास्ते तावत्सिद्धिदाः । भक्तानां तु साक्षात् एव सिद्धयः त्वन्मयत्वेन प्रकाशमानत्वात् ॥२॥

सर्वदा सर्वभावेषु युगपत्सर्वरूपिणाम् ।
त्वामर्चयन्त्यविश्रान्तं ये ममैतेऽधिदेवताः ॥३॥

सर्वदेति । युगपत्सर्वरूपिणम् अक्रमक्रोडीकृताशेषनिर्भरं त्वां सर्वकालं सर्वत्र ये अविश्रान्तं कृत्वा अर्चयन्ति ते मम अधिष्ठातृदेवरूपाः ॥ ३ ॥

ध्यानायासतिरस्कारसिद्धस्त्वत्स्पर्शनोत्सवः ।
पूजाविधिरिति ख्यातो भक्तानां स सदाऽस्तु मे ॥४॥

ध्यानायासेति । ध्यानमुच्चारकरणादीनप्युपलक्षयति तेन तेनोच्चारकरणध्यानाद्यायासस्य तिरस्कारेण अपहस्तनेन यस्त्वत्स्पर्शनोत्सवः सिद्धो प्रयत्नासिद्धः स एव भक्तानां पूजाविधिरिति ख्यातः, यथोक्तम् "निर्विकल्पे महाव्योम्नि सा पूजा ह्यादराल्लयः" इति एष स एव पूजाविधिर्मम सदाऽस्तु ॥ ४ ॥

**भक्तानां समतासारविषुवत्समयः सदा ।**
**त्वद्भावरसपीयूषरसेनैषां तदर्चनम् ॥ ५ ॥**

भक्तानामिति । विषुवति पूजाकर्तव्यत्वेनाम्नाता सैव विषुवत्समयः शिवैक्यप्रथात्मसमतासारभक्तानां सदैवास्ति, तथा त्वद्भावनारस एव पीयूषरसः तेन सदैषामर्चनमस्ति ॥५॥

**यस्यानारम्भपर्यन्तौ न च कालक्रमः प्रभो ।**
**पूजात्माऽसौ क्रिया तस्याः कर्तारस्त्वज्जुषः परम्॥६॥**

यस्यानारम्भेति । न च कालक्रम इति मध्येऽपि क्रमवत्ता नास्ति, असौ समावेशविश्रान्त्यात्मा क्रिया, तस्याश्च त्वज्जुषः त्वत्समावेशतत्त्वज्ञा एव परं कर्तारो नान्ये ॥ ६ ॥

**ब्रह्मादीनामपीशास्ते ते च सौभाग्यभागिनः ।**
**येषां स्वप्नेऽपि मोहेऽपि स्थितस्त्वत्पूजनोत्सवः॥७॥**

ब्रह्मादीनामिति । निःसामान्यमहेश्वरसमावेशशालित्वाद्ब्रह्मादीनामपीश्वरा इति वस्त्वेवैतत् न त्वर्थवादः, सौभाग्य भागिन इति आनन्दरसनिर्भरत्वात्सर्वस्पृहणीयाः, स्वप्नेऽपि मोहेऽपीति न केवलं जाग्रति "यावत्स्वप्नसुषुप्तयोरिति" स्वरसोदितस्त्वत्स्पर्शनोत्सवस्त्वत्समावेशाभ्युदयः ॥ ७ ॥

**जपतां जुह्वतां स्नातां ध्यायतां न च केवलम् ।**
**भक्तानां भवदभ्यर्चामहो वाऽस्त्ययदा तदा ॥८॥**

जपतामिति । जपध्यानादिपदे तावदीश्वरपूजापरा भवन्ति भक्ता पुनः सदैव त्वत्पूजनोत्सवाविष्टाः ॥ ८ ॥

**भवत्पूजासुधास्वादसम्भोगसुखिनः सदा ।**
**ब्रह्मादीनामथा ब्रह्ममुख्यानामस्ति कः समः॥९॥**



भवत्पूजेति । भवत्पूजैव सुधास्वादसम्भोगस्तेन यः सुखी भक्तिमान् तस्य ब्रह्मादीनां मध्यात् कः समः न कश्चित् अत्र युक्तिरुक्तैव ॥ ९ ॥

**जगत्क्षोभैकजनके भवत्पूजामहोत्सवे ।**
**यत्प्राप्यं प्राप्यते किंचिद्भक्ता एव विदन्ति तत्॥१०॥**

जगदिति । जगतः षट्त्रिंशत्तत्त्वमयस्य स्थूलसूक्ष्मादेर्देहस्य तद्द्वारेण विश्वस्य क्षोभं विगलत्स्वरूपतया वैवश्यमेव जनयति यो भवत्पूजामहोत्सवः तत्र यत्किञ्चित्परमानन्दात्मकं पूर्णं स्वं स्वरूपं प्रापणार्हं प्राप्यते तद्भक्ता एव विदन्ति ॥१०॥

**त्वद्धाम्नि चिन्मये स्थित्वा षट्त्रिंशत्तत्त्वकर्मभिः।**
**कायवाक्चित्तचेष्टाद्यैरर्चये त्वां सदा विभो ॥११॥**

त्वद्धाम्नीति । धाम तेजः षट्त्रिंशत्तत्त्वानां कर्माणि कायवाक्चित्तचेष्टाख्यानि तैरित्थं प्रत्यभिज्ञातव्याप्तिकैरहं प्रभो त्वामर्चये देहादिषट्त्रिंशत्तत्त्वमयं कठिनत्वद्रवत्वप्रकाशमानत्वादागमेषु बहुषु प्रतिपादितं तथा त्रिशिरःशास्त्रे "सर्वदेवमयः काय" इत्युपक्रम्य "पृथिवी कठिनत्वेन द्रवत्वेऽम्भः प्रकीर्तितम्" इत्यादि "त्रिशिरो भैरवः साक्षाद्व्याप्य विश्वं व्यवस्थितः" इत्यन्तमुपदिष्टम् ॥११॥

**भवत्पूजामयासङ्गसम्भोगसुखिनो मम ।**
**प्रयातु कालः सकलोऽप्यनन्तोपीयदर्थये ॥१२॥**

भवदिति । भवत्पूजामयो य आसङ्गः तेन तत्परत्वेन यः सम्भोगस्तेन सुखिनो निर्वृतस्य मे सकलो निरवशेषः अनन्तो निरवधिः प्रयात्विति इयदर्थये न त्वन्यत् ॥१२॥

भवत्पूजामृतरसा भोगलम्पटता विभो ।
विवर्धतामनुदिनं सदा च फलतां मम ॥१३॥

भवत्पूजेति । यावद्यावद्भवत्पूजामृतरससम्भोगो मया प्राप्यते तावत्तावदधिकमधिकं तत्र स्पृहणीयालुतामेव विवर्धतां तदुत्कर्षसमासादनफलेन च सदा फलतु ॥ १३ ॥

जगद्विलयसञ्जातसुधैकरसनिर्भरे ।
त्वदब्धौ त्वां महात्मानमर्चन्नासीय सर्वदा ॥१४॥

जगदिति । जगतो विश्वस्य विलयेन संहारेण जातो यः सुधामय एव रसः तेन निर्भरे परिपूर्णे त्वत्समुद्रे, त्वामेव महात्मनं विश्वव्यापकं सदा अर्चन् अहमासीय स्थेयाम् ॥ १४ ॥

अशेषवासनाग्रन्थिविच्छेदसरलं सदा ।
मनो निवेद्यते भक्तैः स्वादुपूजाविधौ तव ॥१५॥

अशेषेति । तव पूजाविधौ भक्तैः स्वादु चमत्कारसारं, सदा मनो निवेद्यते त्वय्येवार्प्यते, कीदृक् अशेषा वासनात्मानो ग्रन्थयो बन्धास्तेषां विच्छेदेन विदलनेन सरलं स्पष्टं सक्तकुसृतिकौटिल्यम् ॥ १५ ॥

अधिष्ठायैव विषयानिमाः करणवृत्तयः
भक्तानां प्रेषयन्ति त्वत्पूजार्थममृतासवम् ॥१६॥

अधिष्ठायैवेति । इमाः करणवृत्तयोऽपि चक्षुरादिदेव्यः, विषयान् रूपादीनधिष्ठायैव आक्रम्यैव, सृष्टिरक्षादिदेवतोदयक्रमेण भक्तानां त्वत्पूजार्थमन्तरमसृतासवं प्रेषयन्ति ॥ १६ ॥

भक्तानां भक्तिसंवेगमहोष्मविवशात्मनाम् ।
कोऽन्यो निर्वाणहेतुः स्यात्त्वत्पूजामृतमज्जनात् ॥१७



भक्तानामिति । भक्तिसंवेगमहोष्मा भक्त्युद्रिक्ततेजस्तेन विवशात्मनां प्रज्वलितात्मनां त्वत्पूजामृतमज्जनादन्यो निर्वाणहेतुर्न कश्चित् ॥ १७ ॥

सततं त्वत्पदाभ्यर्चासुधापानमहोत्सवः ।
त्वत्प्रसादैकसम्प्राप्तिहेतुर्मे नाथ कल्प्यताम् ॥१८॥

सततमिति । त्वत्पदार्चा प्राग्वत् सदैव आनन्दव्याप्तिप्रदत्वात्सुधापानमहोत्सवः, कीदृक् त्वत्प्रसादस्य चिदानन्दात्मकत्वात् स्वरूपनैर्मल्यस्यैकः सम्प्राप्तिहेतुर्यस्य स मे सततं कल्पतां घटताम् ॥ १८ ॥

अनुभूयासमीशान प्रतिकर्म क्षणात्क्षणम् ।
भवत्पूजामृतापानमहास्वादमहामुदम् ॥ १९ ॥

अनुभूयेति । प्रतिकर्म प्रतिव्यापारे, क्षणात् क्षणं भूयो भूयः, भवत्पूजामृतापानस्य सम्बन्धी मदप्रधानो हर्षप्रबलः आस्वादस्तदुत्थां महामुदं परमानन्दमनुभूयासम्, आमुदं मुदः पर्यन्त महती मुत् पूजास्वादस्य च ॥ १९ ॥

दृष्टार्थ एव भक्तानां भवत्पूजामहोद्यमः ।
तदैव यदसम्भाव्यं सुखमास्वादयन्ति ते ॥२०॥

दृष्टार्थ इति । प्राप्तव्यस्य प्राप्तत्वान्नैषामाकाङ्क्षा कचिदस्ति यतस्ततो दृष्टार्थ एव, त्वत्पूजायां महानुद्यमः तथा हि तदैव पूजासमय एव, असम्भाव्यं सुखं परमानन्दं, ते भक्ता आस्वादयन्ति ॥ २० ॥

यावन्न लब्धस्त्वत्पूजासुधास्वादमहोत्सवः ।
तावन्नास्वादितो मन्ये लवोऽपि सुखसम्पदः ॥२१॥

यावदिति । लवोऽपीत्यत्रेदमाकूतं लौकिकसुखानि असुखान्येव कृत्रिमत्वात् यस्त्वकृत्रिमः समावेशानन्दः सैव पारमार्थिकी सुखसम्पत् ॥ २१ ॥

भक्तानां विषयान्वेषाभासायासाद्विनैव सा ।
अयत्नसिद्धं त्वद्धामस्थितिः पूजासु जायते ॥२२॥

भक्तानामिति । पूजासु समावेशकालेषु, ध्यानादियत्नं विना सिद्धं प्रस्फुरन्ती त्वद्धामनि स्थितिः सेति लोकोत्तरा भक्तानां जायते, कथं विषयाणां कुसुमधूपाविलेपनादीनामन्वेषाभासो मार्गणप्रतीतिः स एवायासस्तं विनैव तद्विरहेणेत्यर्थः ॥२२॥

न प्राप्यमस्ति भक्तानां नाप्येषामस्ति दुर्लभम् ।
केवलं विचरन्त्येते भवत्पूजामदोन्मदाः ॥ २३ ॥

नेति । पूर्णशिवात्मकस्वस्वरूपलाभाद्भक्तानां प्रापणीयं दुर्लभं वा न किंचिदस्ति, भक्त्यासवक्षीबाश्च केवलमप्रयोजनमेव विचरन्ति ॥ २३ ॥

अहो भक्तिभरोदारचेतसां वरदत्वयि ।
श्लाघ्यः पूजाविधिः कोऽपि यो न याच्ञाकलंकितः ॥२४॥

अहो इति । उदारचेतस्त्वं तत्वत एषामेव ये वरदमपि त्वां न किंचन याचन्ते, कोऽपीत्यलौकिकः ॥ २४ ॥

का न शोभा न को ह्लादः का समृद्धिर्नवापरा ।
को वा न मोक्षः कोऽप्येष महादेवो यदर्च्यते ॥२५॥

का इति । कोऽपीति चिदात्मा महेश्वरो यदर्च्यते सा शोभादीप्तिः का न सर्वेत्यर्थः, एवमन्यत्, को वा न मोक्ष इति सांख्यवैष्णवशाक्तनाकुलपाशुपातादिमोक्षातिशायिनः परमानन्दसारस्य विश्वपरिपूर्णतामयस्य मोक्षस्य लाभात् ॥ २५ ॥



अन्तरुल्लसदच्छाच्छभक्तिपीयूषपोषितम् ।
भवत्पूजोपयोगाय शरीरमिदमस्तु मे ॥ २६ ॥

अन्तरिति । अन्तः संवित्पदे उल्लसता अच्छाच्छेन विश्वप्रतिबिम्बक्षमेण भक्तिपीयूषेण समावेशामृतेन पोषितं पारदेन ताम्रमिव कालिकाक्षपणेन दिदीप्यमानकल्याणमयीकृतं इदं मम शरीरं भवत्पूजोपयोगायास्तु, समावेशरसं सिद्धमपि त्वय्येव चिदानन्दघने प्रविश्य विलीयताम् ॥ २६ ॥

त्वत्पादपूजासम्भोगपरतन्त्रः सदा विभो ।
भूयासं जगदीशान एकः स्वच्छन्दचेष्टितः ॥२७॥

त्वदिति । जगतां कालाग्न्यादिसदाशिवान्तानामीशः स्वामी, स्वतन्त्रोऽहं त्वत्पादपूजाह्लादपरतन्त्रः स्याम्, एतदेव हि तदसाधारणं जगदैश्वर्यं स्वातन्त्र्यं च ये त्वत्पादसमावेशवैवश्यम् अन्यपादं पारतंत्र्येऽपि निःसामान्यमैश्वर्यं स्वातन्त्र्यं चेत्यद्भुतरसध्वनिः ॥ २७ ॥

त्वद्ध्यानदर्शनस्पर्शतृषि केषामपि प्रभो
जायते शीतलस्वादु भवत्पूजामहासरः ॥२८॥

त्वद्ध्यानेति । परमेश्वरं चिदानन्दघनमपि पश्येयमपि स्पृशेयमिति यत्त्वद्ध्याने दर्शनस्पर्शनतृट् तस्यां सत्यां केषामपीति साक्षात्त्वदनुगृहीतानां शीतलस्वादु भवत्पूजामहासरो जायते सन्तापहारिसचमत्कारत्वदर्चा परिपूर्णः समुद्रो नव एवोत्पद्यत इत्यर्थः ॥ २८ ॥

यथा त्वमेव जगतः पूजासम्भोगभाजनम् ।
तथैव भक्तिमानेव पूजासम्भोगभाजनम् ॥२९॥

यथेति । जगतो विश्वस्य मध्यात्त्वमेव व्याख्यातरूपस्य पूजासम्भोगस्य भाजनमाश्रयो यथा, हे ईश स्वामिन्, तथा भक्तिमानेव समावेशशाल्येव तादृशः पूजासम्भोगस्य भाजनं निर्वर्तक इत्यर्थः ॥ २९ ॥

कोऽप्यसौ जयति स्वामिन्भवत्पूजामहोत्सवः ।
षट्त्रिंशतोऽपि तत्त्वानां क्षोभो यत्रोल्लसत्यलम् ३०

कोऽपीति। नीतिसमावेशशाली ह्यसाविति स्वामिन्नितीरितः, षट्त्रिंशतोऽपीति देहाश्रयाणां तद्द्वारेण तद्बाह्यानां तत्वानां क्षोभ इति, संविदग्निप्लोपवैषम्यम् ॥ ३० ॥

नमस्तेभ्यो विभो येषां भक्तिपीयूषवारिणा ।
पूज्यान्येव भवन्ति त्वत्पूजोपकरणान्यपि ॥३१॥

नमस्तेभ्य इति । त्वत्पूजार्थमुपकरणानि कुसुमादीनि, येषां भक्तिपीयूषवारिणा समावेशामृतरसेन, पूज्यानि भवन्ति त्वदाप्लवेनेन शिवतादिव्यक्तेः पूजार्हाणि जायन्ते, तेभ्यो नमः ॥३१॥

पूजारम्भे विभो ध्यात्वा मन्त्राधेयांत्वदात्मताम् ।
स्वात्मन्येव परे भक्ता मान्ति हर्षेण न क्वचित् ॥३२॥

पूजेति । मन्त्रेण मननत्राणधर्मेण चिन्माहात्म्यप्रकर्षकेण आधातव्यां शिवो भूत्वेति स्थित्या सम्पाद्यां, त्वदात्मतां, पूजारम्भे ध्यात्वा चिन्तयित्वा मन्त्रोच्चिचारयिपात्मकपूजाप्रविवृत्सायामेवायमेवोदयस्तस्येति नीत्या भक्तिप्रकर्षाच्छिवीभूय भक्ताः स्वात्मन्येव परे पूर्णरूपेण न मान्ति न वर्तन्ते ॥ ३२ ॥

राज्यलाभादिवोत्फुल्लैः कैश्चित्पूजामहोत्सवे ।
सुधासवेन सकला जगती संविभज्यते ॥३३॥



राज्येति । उत्फुल्लैरिति महाविकासयुक्त्या श्रीभैरवीयमुद्रानुप्रविष्टैः सुधासवेनामृतपानेन, जगती समस्ता वेद्यवेदकभूः, संविभज्यते परिपूर्यते स्वानन्दमयीक्रियते, राज्यलाभोत्फुल्लैश्चोत्सवे सर्वा भूः आसवेन संविभज्यते इति स्पष्टम् ॥ ३३ ॥

पूजामृतापानमयो येषां भोगः प्रतिक्षणम् ।
किं देवा उत मुक्तास्ते किं वा केप्येव ते जनाः ॥३४॥

पूजेति । भोगश्चमत्कारः, प्रतिक्षणमित्रविच्छेदेन केप्येवेति स्तोत्रशतैरपि स्तोतुमशक्याः ॥ ३४ ॥

पूजोपकरणीभूतविश्वावेशेन गौरवम् ।
अहो किमपि भक्तानां किमप्येव च लाघवम् ॥३५॥

पूजेति, पूजायां यदुपकरणीभूतं परिकरीभूतं, विश्वं षट्त्रिंशत्तत्त्वरूपं शरीरं बाह्यं च तस्य य आवेशश्चिद्भूमावनुप्रवेशस्तेन, अत अहो आश्चर्यं, किमप्यसामान्यं भक्तानां गौरवं प्रभावितत्वम्, लाघवं च प्रयत्नेनैवाशेषस्वीकारित्वमथ च मायीयभेदभारनिवृत्तिः, गौरवे च कथं लाघवमिति विरोधच्छाया ॥ ३५ ॥

पूजामयाक्षविक्षेपक्षोभादेवामृतोद्गमः ।
भक्तानां क्षीरजलधिक्षोभादेव दिवौकसाम् ॥३६॥

पूजामयेति । पूजामयानि विश्वस्य चिद्भूमिविश्रान्तिदायीनि देवताचक्रोदयमयानि अक्षाणि इन्द्रियाणि तेषां विक्षेपः स्वविषयग्रहणपरत्वं स एव क्षोभो व्याकुलता तत एवाल्पबोधापेक्षयाऽभिमतादपि भक्तानाममृतस्य महानन्दस्योद्गम उल्लासो ग्राह्यग्राहकविप्लवेऽपि भक्तानां चिदानन्दाभिव्यक्तिरेव-

र्थः, तदुक्तम् "ग्राह्यप्रवृत्तावपि तत्स्वभाव" इति यथा देवानां क्षीरसमुद्रक्षोभादमृतस्य सुधाया उल्लासः अत्रापि पूजा-सवस्य पूज्यस्य नागराजात्मनः अक्षस्य नेत्रस्य यो विक्षेपः आकर्षापकर्षक्रमः स एव क्षोभ इति ॥ ३६ ॥

**पूजां केचन मन्यन्ते धेनुं कामदुघामिव ।**
**सुधाधाराधिकरसां धयन्त्यन्तर्मुखाः परे ॥ ३७ ॥**

पूजामिति । यथा कामधेनुरभीष्टं पूरयति तथा केचित्फल-काङ्क्षिणः पूजां मन्यन्ते निश्चिन्वन्ति, परे केचिदेव, सुधाधारा-धिकः अमृतधारातिशायी रसः प्रसरो यस्यास्तां पूजामेव कामधे-नुमन्तर्मुखाः सन्तो, धयन्ति पिबन्ति सद्य एव चमत्कुर्वन्ती-त्यर्थः ॥ ३७ ॥

**भक्तानामक्षविक्षेपोऽप्येष संसारसंमतः ।**
**उपनीय किमप्यन्तः पुष्णात्यर्चामहोत्सवम् ॥ ३८ ॥**

भक्तानामिति । अक्षविक्षेपः इन्द्रियप्रसरो, लोके संसारत्वेन संमतः, किमपीत्यलौकिकमानन्दरूपम्, उपनीय प्रापय्य भक्तानां करणे श्रीचक्रप्रसरसमाविष्टानाम्, अर्चामहोत्सवं पूर्णस्वरूपवि-श्रान्ति पुष्णाति, तथा च ममैव "प्रज्ञामन्दरमक्तितासममहाभेदो-दधेरुद्गतान्यक्षक्षेपविवर्तनाभिरभितो दुग्धामृतान्यादरात् । व-क्षित्वा क्व विकल्पदैन्यविरहं भूतीरनादृत्य ये पायं पायमलं पिबन्ति जगति श्लाघ्यास्त एवामरा" इति ॥ ३८ ॥

**भक्तिक्षोभवशादीश स्वात्मभूतेऽर्चनं त्वयि ।**
**चित्रं दैन्याय नो यावद्दीनतायाः परं फलम् ॥ ३९ ॥**

भक्तीति । त्वयि स्वात्मभूते यद्भक्तिक्षोभसमावेशवैवश्याद-र्चनं तच्चित्रमाश्चर्यं, दैन्याय न भवति न कांचिद्दीनतां फलति,



अन्येषां ह्येतदाकाङ्क्षाप्रधानमेवं न केवलमेवं यावत्प्रत्युत दीन-तया लौकिक्याः स्पृहायाः परं पार्यन्तिकमानन्दरूपं विभवादि-फलस्यापि फलभूतं परं च पूर्णं फलम् ॥ ३९ ॥

**उपचारपदं पूजा केषांचित्त्वत्पदाप्तये ।**
**भक्तानां भवदैकात्म्यनिर्वृतिप्रसरस्तु सः ॥ ४० ॥**

उपचारेति । केषांचिदिति भेदनिष्ठानां त्वत्पदाप्तये त्वदीयं पदं प्राप्तुमुपचारपदं क्रियाभूराराधनोपायमात्रमेव, भ-क्तानां तु भवदैकात्म्यरूपाया निर्वृतेः स प्रसरो विकासः स इति विधेयापेक्षं पुंलिङ्गम् ॥ ४० ॥

**अप्यसम्बद्धरूपाऽर्चा भक्त्युन्मादनिरर्गलैः ।**
**वितन्यमाना लभते प्रतिष्ठां त्वयि कामपि ॥ ४१ ॥**

अपीति । पूजायां मनागपीति, कर्तव्यताऽन्यथाभावे प्रत्यवायः यः प्रक्रियाशास्त्रे युक्तः, आश्चर्यं पुनरिदं भक्त्युन्मादेन समावेशवैवश्येन निरर्गलैः विस्मृतेतिकर्तव्यतानियमैरसम्ब-द्धरूपापि असमञ्जसाऽपि अर्चा, वितन्यमाना प्रसार्यमाणा, कामपीति क्रियानिष्ठैः सम्भावयितुमप्यशक्यामसामान्यां, प्रतिष्ठां सम्यगाभिमुख्येनावस्थितिं त्वयि लभते इत्यद्भुतध्वनिः ॥ ॥४१॥

**स्वादुभक्तिरसास्वादस्तब्धीभूतमनश्च्युताम् ।**
**शम्भो त्वमेव ललितः पूजानां किल भाजनम् ॥ ४२ ॥**

स्वाद्विति । स्वादुश्चमत्कारसारो यो भक्तिरसस्तस्या-स्वादनेन, स्तब्धीभूतं चलितचाञ्चल्यं यन्मनस्ततश्च्युत-श्च्यवनं प्रसरो यासां, पूजानां विश्वार्पणक्रियाणां, तासां ललितो हृद्युचितस्त्वमेव चिदात्मा, शम्भो श्रेयोनिधे, भाजनमाश्रयः,

किलेति युक्तौ एतदेव युज्यत इत्यर्थः, अन्यस्य ब्रह्मादेर्भेदमयत्वेनेदृगर्चापात्रत्वाभावात् पूजानामिति बहुवचनं विचित्रविश्रान्तिसारताप्रथनाय ॥ ४२ ॥

परिपूर्णानि शुद्धानि भक्तिमन्ति स्थिराणि च ।
भवत्पूजाविधौ नाथ साधनानि भवन्तु मे ॥४३॥

परिपूर्णानीति । भवतश्चिन्नाथस्य, पूजाविधौ अवश्यकार्यायामर्चायां,मम साधनानि चक्षुरादीनि अतएव चिन्मरीचिमयत्वाच्छुद्धानि, भक्तिमन्ति विश्वार्पणेन त्वत्सेवापराणि, कदाचिदपि पाशववासनाऽस्पृष्टत्वात् स्थिराणि नित्यमीदृश्येव भवन्तु॥४३॥

अशेषपूजासत्कोशे त्वत्पूजाकर्मणि प्रभो ।
अहो करणवृन्दस्य काऽपि लक्ष्मीर्विजृम्भते ॥४४॥

अशेषेति । इमामेव दशां विमृशन्नाह, शक्तीनामुल्लासप्रसरादिप्रभवशीलप्रभो, अशेषाणां पूजानां विचित्राणां सत्कोशे शोभनगञ्जरूपे, त्वत्पूजाकर्मणि पूर्णचिदानन्दघनश्रीमन्नाथभैरवस्वरूपविश्रान्तौ, करणवृन्दस्य रश्मिचक्रस्य, अहो, काऽपि स्वसंवित्साक्षिका, लक्ष्मीः दीप्तिर्विजृम्भते स्फुरतीति, महार्थपरिपूर्णस्यास्य सारोपदेशवर्षीणि इमानि सूक्तान्युल्लसन्ति ॥ ४४ ॥

एषा पेशलिमा नाथ तवैव किल दृश्यते ।
विश्वेश्वरोऽपि भृत्यैर्यदर्च्यसे यच्च लभ्यसे ॥४५॥

एषा इति । तान्येवाह, पेशलिमा सरलता, तवैवेति चिद्घनत्वेन सर्वेषामात्मनो, विश्वेश्वरत्वेऽपि सदाशिवादीनामपि स्वामी, अर्च्यसे समाविश्यसे लभ्यसे निरर्गलमात्मीक्रियसे ॥४५॥

सदा मूर्तादमूर्ताद्वा भावाद्यद्वाप्यभावतः ।
उत्थेयान्मे प्रशस्तस्य भवत्पूजामहोत्सवः ॥४६॥



सदेति । मूर्तो भावो घटादिः अमूर्तः सुखादिः मूर्तो भावो घटस्य कपालानि अभावो विकल्पकल्पितप्रसज्यप्रतिषेधात्मा तत, उत्थेयादिति समस्तं भावाभावपदमधरीकृत्य उन्मज्ज्यामित्यर्थः, भवत्पूजामहोत्सवस्त्वद्विश्रान्त्युदयः, भावादित्यादिका ल्यब्लोपे पञ्चमी ॥ ४६ ॥

कामक्रोधाभिमानैस्त्वामुपहारीकृतैः सदा ।
येऽर्चयन्ति नमस्तेभ्यस्तेषां तुष्टोऽसि तत्त्वतः॥४७॥

कामक्रोधेति । सर्वचित्तवृत्तीनां कामादिभिः स्वीकारात्तेषामेवोपादानमुपहारीकृतैर्विचार्य त्वय्येवार्पितैः, तत्वतस्तुष्टोऽसि "हर्षामर्षभयक्रोधैर्मुक्तो यः स च मे प्रियः" इत्यभिधानात् , ननु च श्रीमन्महार्थसारोक्तिमये स्वकृतस्तोत्रेऽयं श्लोको दद्रुस्थानीयः सत्यम् अशेषवासनाग्रन्थीत्यादिकस्यापि स्मर्तव्यं लोकवद्भवत्तमे निजनिजेषु अस्मिन्नेव जगति आवेदकत्पानाशनसमुल्लास न क्वापि गत्वेऽत्यादयस्त्वनुगुणा अप्यत्र श्लोका न सन्ति उदयमसमञ्जसशय्याप्रस्तारिणः विश्वावर्तस्यैव प्रसादः, एवमन्येष्वपि स्तोत्रेष्वेवंप्रायं बहुरचितमस्ति न त्वस्माभिर्नोद्घाटितमित्यलम् सूक्तान्येवानुसरामः ॥ ४७ ॥

जयत्येष भवद्भक्तिभाजां पूजाविधिः परः ।
यस्तृणैः क्रियमाणोऽपि रत्नैरेवोपकल्पते ॥४८॥

जयतीति । अपिर्भिन्नक्रमस्तेन तृणैरपि क्रियमाणः यो रत्नैरेवोपकल्पते पूर्णविश्रान्तिप्रदो भवति, स भगवद्भक्तिभाजां त्वत्समावेशेन शालिनां, परः पूर्णः, पूजाविधिर्जयतीति शिवम्॥४८॥

इति श्रीमदीश्वरप्रत्यभिज्ञाकारोत्पलदेवाचार्यविरचितसप्तदशस्तोत्रे
परमेश्वरस्तोत्रावलौ दिव्यक्रीडाबहुमाननामनि
श्रीक्षेमराजविरचिता विवृतिः ॥ १७ ॥

ॐ तत्सत् । जगतोन्तरतो भवन्तमाप्त्वा
पुनरेतद्भवतोन्तराल्लभन्ते ।
जगदीश तवैव भक्तिभाजो
न हि तेषामिह दूरतोऽस्ति किंचित् ॥१॥

ॐ जगत इति । हे जगदीश ये तवैव चिद्रूपस्य स्वात्मनो, भक्तिभाजस्ते जगतो विश्वस्यान्तरतो मध्यात्, भवन्तमाप्त्वा प्रकाशमानव्यवहारपदादेव प्रकाशरूपं त्वां लब्ध्वा, पुनरस्य ते जगद्भवतश्चिद्रूपस्यान्तरतो मध्याल्लभन्ते, यस्मात्तेषां भक्तिभाजां सम्यक् प्रत्यभिज्ञातविश्वात्मकत्वत्स्वरूपाणामिह जगति दूरे न किंचिदिति सर्वस्य स्वाङ्गकल्पत्वेन स्फुरणात्, तदुक्तम् "यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।" इत्यादि गीतासु ॥ १ ॥

क्वचिदेव भवान्क्वचिद्भवानी
सकलार्थक्रमगर्भिणी प्रधाना ।
परमार्थपदे तु नैव देव्या
भवतो नापि जगत्त्रयस्य भेदः ॥ २ ॥

क्वचिदिति । मुक्तौ क्वचिदिति, तदुपायतायां भोगे च भवानी परा शक्तिः, सकलः कालादिक्षित्यन्तः, अर्थक्रमः प्रमेयराशिर्गर्भेऽन्तः, शिम्बिकाबीजवत्संस्पृष्टौ यस्याः परमार्थपदे गलितकल्पनायां तात्त्विक्यां दृष्टौ पुनः जगत्त्रयस्यापि भवातिभवाभयात्मनः त्वत्तो भेदो नास्ति किं पुनः शक्तेः ॥ २ ॥

नो जानते सुभगमप्यवलेपवन्तो
लोकाः प्रयत्नसुभगा निखिला हि भावाः ।



चेतः पुनर्यदिदमुद्यतमप्यवैति
नैवात्मरूपमिह हा तदहो हतोऽस्मि ॥ ३ ॥

नो जानत इति । लोकास्तावदवलेपवन्तः सन्तः, सुभगमपि चिदात्मकं रूपं भावानां न जानन्ति, यतः प्रयत्नने सर्वथा निश्चयेन, सुभगा उत्कृष्टा एव, निखिलाः सर्वे, भावाः प्रकाशमानत्वेन चिन्मयत्वात्पुनरास्तां भावस्वरूपज्ञानं आश्चर्यमात्मनोऽपि रूपमुद्यतमपि चेतो यत्रैवावैति समावेशधारारुरुक्षारणकाक्रान्तमपि यश्चिदैकात्म्यं न लभते तत् हतोऽस्मि इति जगति समावेशप्रकर्षमलभमानस्य ताम्यत इयमुक्तिः ॥ ३ ॥

भवन्मयस्वात्मनिवासलब्ध-
सम्पद्भराभ्यर्चितयुष्मदङ्घ्रिः ।
न भोजनाच्छादनमप्यजस्र-
मपेक्षते यस्तमहं नमामि ॥ ४ ॥

भवन्निति । भवान् चिद्रूपः प्रकृतं रूपं यस्य तथाभूते स्वात्मनि निवासेन विश्रान्त्या लब्धेन सम्पद्भरेण परमानन्दभूतिप्रसरेणाभ्यर्चितौ गाढमभेदेनावष्टब्धौ युष्मदङ्घ्री येन तथा भूतोऽजस्रं यो भोजनाच्छादनमपि नापेक्षते अश्नन्यद्वातद्वेति स्थित्या व्यवहारानपेक्षः पूजापर एव तमहं नौमि ॥ ४ ॥

सदा भवद्देहनिवासस्वस्थो-
ऽप्यन्तः परं दह्यत एष लोकः ।
तवेच्छया तत्कुरु मे यथाऽत्र
त्वदर्चनानन्दमयो भवेयम् ॥ ५ ॥

सदेति । सदा भवदीये देहे उपचिते स्वरूपेति वसनेन वस्तुतः स्वस्थः, आनन्दमयोऽप्येष लोकः, तवेच्छया भेदप्रवाहरू-

मया त्वन्मय्या शक्त्या, अतः परमतिशयेन, दह्यते तद्दुःखैरायास्यत यत एवं यस्मात्तवेच्छयाऽनुजिघृक्षयाऽत्र कल्पिते विषये, त्वं मे भक्तस्य, तदिति तथा कुरु यथाऽहं त्वदर्चनानन्दमयः स्याम्॥५॥

स्वरसोदितयुष्मदाङ्घ्रिपद्म-
द्वयपूजामृतपानसक्तचित्तः ।
सकलार्थचयेष्वहं भवेयं
सुखसंस्पर्शनमात्रलोकयात्रः ॥ ६ ॥

स्वरसेति । स्वरसेनाप्रयत्नमेवोदिता या युष्मदङ्घ्रिपूजा त्वत्समावेशसम्पत्सैवामृतपानं तत्र सक्तचित्तो विश्रान्तिमानसः, सकलेषु हेयोपादेयाद्यभिमतेषु अर्थचयेषु व्यवहारेषु, अहं सुखस्पर्शनमात्रलोकयात्रो भवेयं स्वानन्दोल्लाससारजगद्व्यवहारः स्याम् ॥ ६ ॥

सकलव्यवहारगोचरे
स्फुटमन्तः स्फुरति त्वयि प्रभो ।
उपयान्त्यपयान्ति चानिशम्
मम वस्तूनि विभान्तु सर्वदा ॥ ७ ॥

सकलेति । सर्वदा सदाऽनिशं निर्विरामं, व्यवहारविषयस्यान्तर्मम त्वयि चिद्रूपे, स्फुटं स्फुरति सति सर्वाणि वस्तूनि उपयान्त्यपयान्ति, च सृज्यमाणानि संह्रियमाणानि च, स्फुरन्तु त्वदाविष्टोऽहं सदा भावसर्गसंहारकृत्स्यामित्यर्थः, उपयान्त्यपयान्ति चेति पाठे आगच्छन्तोऽपि दर्पणप्रतिबिम्बवद्विलीयमाना एव न त्ववस्थितिं मनागपि भजमाना भान्तु इति व्याख्येयं च एवार्थे उद्यन्तो विनश्यन्तश्च लोकवद्यथा भान्ति तथा भान्त्विति वा योज्यम् ॥ ७ ॥



सततमेव तवैव पुरेऽथवाऽ-
प्यरहितो विचरेयमहं त्वया ।
क्षणलवोप्यथ मा स भवेत् स्म मे
न विजये ननु यत्र भवन्मयः ॥ ८ ॥

सततमिति । तवैव सम्बन्धिनि पुरे पूरके शान्ते पदे, विचरेयं शाक्तसमावेशशाली स्याम्, अथवा त्वया विरहित इति शाम्भवसमावेशमयः अथवा भवन्मय इति, त्वद्रूपो विमुक्तस्वभावो, यत्र न विजये न सर्वोत्कर्षेण वर्ते, स क्षणलवोऽपि मे मा भूदित्युत्तरोत्तरसातिशयदशाशंसापरमेतत्, ननु वितर्के ॥८॥

भवदङ्गपरिस्रवत्सुशीता-
मृतपूरैर्भरिते समन्ततोऽपि ।
भवदर्चनसम्पदेह भक्ता-
स्तव संसारसरोन्तरे चरन्ति ॥ ९ ॥

भवदिति । तव भक्ताः भवदर्चनसम्पदा त्वद्विश्रान्तिसम्पदोपलक्षिता, इह संसारसरसो भवसमुद्रस्यान्तरे मध्ये, चरन्ति व्यवहरन्ति, कीदृशि भवदीयात्परशक्तिरूपादङ्गात्परितः समन्तात्स्रवद्भिः सुष्ठु शीतलैः दुःखानलतापोपशान्तिदैरमृतपूरैरानन्दोल्लासैः समन्ताद्भरिते पूरिते इति यावत् ॥ ९ ॥

महामन्त्रतरुच्छायाशीतले त्वन्महावने ।
निजात्मनि सदा नाथ वसेयं तव पूजकः॥१०॥

महामन्त्रेति । महामन्त्रः परवाग्रूपः शुद्धाऽहंविमर्श एव शक्तिशाखाशतैः प्रसृतत्वात्तरुस्तस्य छायया कान्त्या शीतले

भेदसन्तापहारिणि, त्वन्महावने त्वमेव चिदानन्दात्मा महावनं विपुलं विश्रान्तिस्थानं तत्र, निजात्मनि स्वस्वभावे, नाथ सदा तव पूजकः त्वदर्चापरो, वसेयं स्थितिं बध्नीयाम् ॥ १० ॥

प्रतिवस्तु समस्तजीवतः
प्रतिभासि प्रतिभामयो यथा ।
मम नाथ तथा पुरः प्रथां
व्रज नेत्रत्रयशूलशोभितः ॥ ११ ॥

प्रतिवस्त्विति । प्रतिवस्तु प्रतिभावं, समस्तजीवतः सर्वेषां जीवानामसि,त्वं यथा प्रतिभामयः संविद्रूपः, नीलादिग्रहणान्यथानुपपत्त्या प्रतिभासि अप्रत्यभिज्ञातोऽपि वस्तुतः स्फुरसि, तथा मम दासस्य, नाथ पुरोऽग्रे सर्वत्र, नेत्रत्रयेण शूलेन च शोभितः निरतिशयासाधारणाभिज्ञानेन सम्यक् प्रत्यभिज्ञातः सन्, प्रथां व्रज प्रकटीभव समावेशेन स्फुरेत्यर्थः, नेत्रत्रयशूले असाधारणाभिज्ञानोपलक्षणपरे न पुनरत्राकारे भरः समस्तजीवत इति योगे शस् ॥ ११ ॥

अभिमानचरूपहारतो
समताभक्तिभरेण कल्पितात् ।
परितोषगतः कदा भवा-
न्मम सर्वत्र भवेद्दृशः पदम् ॥ १२ ॥

अभिमानेति । अभिमानोऽहङ्कार एव चरुः स्थालीपाकस्तस्योपहारो भगवत्यर्पणं पराहंभावग्रहणं ततः, कीदृशान्मम महेश्वरः स्वामी अस्तीत्येवं, समताप्रधानः यो भक्तिरसः सेवाप्रसरस्तेन कल्पितात्सम्पादितात्परितोषं गतः प्रसन्नः सन्, भवा-



न्कदा सर्वत्र मम दृशो दर्शनस्य, पदं विश्रान्तिभूर्भवेत्, गलिते देहाद्यभिमाने त्वन्मयमेव विश्वं साक्षात्कुर्यामित्यर्थः ॥ १२ ॥

निवसन्परमामृताब्धिमध्ये
भवदर्चाविधिमात्रमग्नचित्तः ।
सकलं जनवृत्तमाचरेयं
रसयन्सर्वत एव किंचनापि ॥ १३ ॥

निवसन्निति । अहं भवदर्चनविधिमात्रे मग्नचित्तः आसक्तः सन्, परमामृताब्धिमध्ये चिदानन्दसमुद्रस्यान्तर्वसन्, सकलं जनवृत्तं लोकचेष्टितमाचरेयं, कीदृक् सर्वतः सर्वस्यैव मध्यात्, किंचनापि अलौकिकमानन्दस्वरूपमभीष्टं रसयन् ॥ १३ ॥

भवदीयमिहास्तु वस्तुतत्वं
विवरीतुं क इवात्र पात्रमर्थे ।
इदमेव हि नामरूपचेष्टा-
द्यसमन्ते हरते हरोऽसि यस्मात् ॥ १४ ॥

भवदीयमिति । इह जगति, यावत्किंचिद्वस्तु तत्सर्वं भवदीयं त्वद्विभूतिरूपमिति, एतदोमित्येवास्तु, अत्रार्थतत्वं विवरीतुं क इव भक्तिमान् पात्रं न कश्चित्, यतो यावद्वयं एतद्विचारयितुं प्रक्रमामहे तावद्यदुपक्रमविचारः तत्त्वदीयमिदमेवासामान्यमनुभवसिद्धं नामरूपचेष्टादि महेश्वर इत्यादि नामचिद्घनं रूपं सर्वसृष्टिसंहारकारिणी चेष्टादिग्रहणात्सर्वज्ञता स्वतन्त्रादिरूपस्तत्प्रथममेव स्फुरत् तद्धरते समावेशवैकल्यापादनेन विस्मृतव्यापारानस्मान्सम्पादयति, युक्तं चैतत् यतस्त्वं हरतीति हर इत्यन्वर्थनाम्ना १४॥

शान्तये न सुखलिप्सुता मना-
ग्भक्तिसम्भृतमदेषु तैः प्रभो ।
मोक्षमार्गणफलाऽपि नार्थना
स्मर्यते हृदयहारिणः पुरः ॥ १५ ॥

शान्तय इति। भक्त्या सम्भृतो मदो यत्र तेषु त्वद्दासेषु विषये, शान्तये दुःखनिवृत्तये, या सुखलिप्सुता भोगस्पृहा, सा मनागपि नास्ति, भक्तिसम्भृतमदत्वादेव, तैश्च पुरः प्रभो इति साक्षात्कृतस्याग्रे, मोक्षमार्गणफलाप्यर्थना न स्मर्यते, कीदृशप्रभोः हृदयहारिणः मायाप्रमातृतां शमयतः, अत एव येषां हृदयमेव हृतं ते कथमन्यत्स्मरेयुरित्येषां समावेशपरतैवोक्ता ॥ १५ ॥

जागरेतरदशाथवा परा
याऽपि काचन मनागवस्थितेः ।
भक्तिभाजनजनस्य साऽखिला
त्वत्सनाथमनसो महोत्सवः ॥ १६ ॥

जागरेति । अवस्थितेर्जगद्व्यवस्थायाः सम्बन्धिनी या काचित् जागरस्वप्नसुषुप्तदशा, मनागिति सङ्कुचिताऽपि, सा सर्वा, भक्तिमतस्त्वत्सनाथमनसः त्वदधिष्ठितचित्तस्य, महोत्सवो महाभ्युदयः, त्वत्सनाथत्वादेव ॥ १६ ॥

आमनोऽक्षवलयस्य वृत्तय-
स्सर्वतः शिथिलवृत्तयोऽपि ताः ।
त्वामवाप्य दृढदीर्घसंविदो
नाथ भक्तिधनसोष्मणां कथम् ॥ १७ ॥



आमन इति। हे नाथ, आमनो मनःपर्यन्तं, अक्षवलयस्येन्द्रियग्रामस्य, वृत्तयो व्यापाराः, सर्वत्र शिथिलवृत्तयश्चञ्चला अपि यास्ताः, भक्तिधनेन सोष्मणामूर्जस्विनां, त्वां चिद्रूपं,प्राप्य,दृढा अशिथिलाः दीर्घाश्च त्वदैकात्म्येन त्वद्रूदेवावस्थाप्रदः शुद्धबोधरूपाः, कथमिति स्वात्मन्येवास्य विस्मयः ॥ १७ ॥

न च विभिन्नमसृज्यत किञ्चिद-
स्त्यथ सुखेतरदत्र न निर्मितम् ।
अथ च दुःखि च भेदि च सर्वथा-
ऽप्यसमविस्मयधाम नमोऽस्तु ते ॥ १८ ॥

न चेति। आदिसर्गादौ त्वया न च नैव, किंचिद्भिन्नम् असृज्यत सृष्टं नाप्यास्ति, स्वतो विभिन्नं किंचित्, अथशब्दोऽप्यर्थे, सर्वस्य चेत्यमानत्वेन चिन्मयत्वाद्भेदासम्भवः, अथ च सुखेतरदुःखरूपं न किंचिन्निर्मितम् उक्तादेव हेतोः, किंचिच्छब्दस्त्रियोंज्यः, अथ चैवं सर्वथैव दुःखि च भिन्नं चापिरेव शब्दार्थः, त्वदैकात्म्याप्रत्यभिज्ञानाच्चैव, एवमसमविस्मयधाम असामान्याश्चर्यभूमे, ते तुभ्यं, नमोऽस्तु ॥ १८ ॥

खरनिषेधखदामृतपूरणो-
च्छलितधौतविकल्पमलस्य मे ।
दलितदुर्जयसंशयवैरिण-
स्त्वदवलोकनमस्तु निरन्तरम् ॥ १९ ॥

खरेति। खरा विषमा या निषेधखदा त्वदख्यातिदरी तस्या अमृतेन त्वदद्वयपीयूषेण यत्पूरणं तेनोच्छलितमुत्प्लावितमत एव धौतं विकल्पमलं यस्य तस्य, तथा दलितश्चूर्णितो दुर्जयः संशय एव वैरी रिपुर्येन तादृशः, सतो मम, त्वदवलोकनं चिद्घनत्वदात्मस्फुरणं, निरंतरं घनमस्तु ॥ १९ ॥

स्फुटमाविश मामथाविशेयं
सततं नाथ भवन्तमस्मि यस्मात् ।
रभसेन वपुस्तवैव साक्षा-
त्परमासत्तिगतः समर्चयेयम् ॥ २० ॥

स्फुटमिति । हे नाथ, त्वं तावत्स्फुटं प्रकटं कृत्वा न तु गूहितत्वेन, समाविश, अथानन्तरमेवंविधे त्वयि सति, उपजातसामर्थ्योऽस्मि अहं भवन्तं सततमाविशेयं गाढावष्टम्भेन स्वीकरोम्येवेति नियोगे लिङ्, यस्मादिति एवं सति, परमासत्तिगतोऽतिनिकटं प्राप्तस्तवैव, रभसेन त्वरया, साक्षाद्वपुस्तात्त्विकं स्वरूपं, सम्यगर्चयेयं समाविशेयमिति यावत् ॥ २० ॥

त्वयि न स्तुतिशक्तिरस्ति कस्या-
प्यथवाऽस्त्येव यतोति सुन्दरोऽसि ।
सततं पुनरर्थितं ममैत-
द्यदविश्रान्ति विलोकयेयमीशम् ॥ २१ ॥

त्वयीति । कस्यापीति, ब्रह्मोपेन्द्ररुद्रादेरपि भेदमयत्वेन चिद्घनपरमेश्वररूपाप्रत्यभिज्ञानात्, अतिसुन्दर इति, चिदानन्दघनस्वात्मरूपत्वादतिस्पृहणीयो हृदयहारी, अतो यस्त्वामात्मानं प्रत्यभिजानाति, तस्य कस्याप्यसामान्यस्य, त्वयि स्तुतिशक्तिरस्त्येव, कस्यापीत्यावर्त्य योज्यं, मम पुनः स्तोतुस्सततमेतदर्थितं वाञ्छितं, यदविश्रान्ति निर्विरामं, त्वामीशं समवलोकयेयम् साक्षात्कुर्यामिति शिवम् ॥ २१ ॥

इति श्रीमदुत्पलदेवाचार्यविरचितौ स्तोत्रावलौ आविष्कारनाम्न्यष्टादशे
स्तोत्रे श्रीराजानकक्षेमराजविरचिता विवृतिः ॥१८॥

---



ॐ प्रार्थनाभूमिकातीतविचित्रफलदायकः ।
जयत्यपूर्ववृत्तान्तः शिवः सङ्कल्पपादपः ॥१॥

ॐप्रार्थनेति । सङ्कल्पतरुर्वाञ्छितमेव ददाति शिवस्तु प्रार्थयितुमशक्यमपीत्यपूर्ववृत्तान्तः ॥ १ ॥

सर्ववस्तुनिचयैकनिधाना-
त्स्वात्मनस्त्वदखिलं किल लभ्यम् ।
अस्य मे पुनरसौ निज आत्मा
न त्वमेव घटसे परमास्ताम् ॥ २ ॥

सर्ववस्त्विति । त्वदिति, त्वत्तः स्वात्मनः सर्वार्थैकाश्रयात्किल विश्वं लभ्यम् अस्येति, सदा स्वरूपनिभालनप्रवणस्य मम पुनः परं लभ्यमास्तां, त्वमेव निज आत्मा स्वं स्वरूपं न घटसे व्युत्थानसमये न प्रकाशसे इति यावत् ॥ २ ॥

ज्ञानकर्ममयचिद्वपुरात्मा
सर्वथैष परमेश्वर एव ।
स्याद्वपुस्तु निखिलेषु पदार्थे-
ष्वेषु नाम न भवेत् किमुतान्यत् ॥ ३ ॥

ज्ञानकर्मेति । सर्ववस्तुषु चिद्वपुर्ज्ञानक्रियात्मा परमेश्वर आत्मैव सर्वेण प्रकारेण त्वधिष्ठानेन वपुः स्वरूपं स्यादस्तीति सम्भाव्यते, एष इति स्फुरद्रूपः, ननु विचित्रकार्यकरणानां नानादेशस्वरूपाणां कथमेकेश्वरात्मता सम्भाव्यते इत्याह एष वस्तुषु अन्यथा पुनर्नामैव संज्ञैव न भवेत्, किमुतान्यत्कार्यकारणस्वरूपादिकं प्रकाशमयत्वं विना कस्याप्यासिद्धेरन्यथा इत्यध्याहार्यम् ॥ ३ ॥

विषमार्तिमुषाऽनेन फलेन त्वदृढगात्मना ।
अभिलीय पथा नाथ ममास्तु त्वन्मयी गतिः॥४॥

विषमेति । विषमार्तिं संसारतापं मुष्णाति यस्त्वदृढगात्मा त्वत्साक्षात्काररूपः पन्था तेन, मे अभिलीय, फलेन फलतः, त्वन्मयी त्वदेकरूपा, गतिः प्राप्तिरस्तु, भुक्त्वा देवदत्तगमनमितिवत्, अभिलीयेत्यत्र क्त्वाप्रत्यये योजयित्वा परतोऽस्त्विति योज्यम् अभिलीलेति पाठे अभिलीलस्फुरच्चिदानन्दविलासेति व्याकर्तव्यम् ॥ ४ ॥

भवदमलचरणचिन्तारत्नलता-
ऽलङ्कृता कदा सिद्धिः ।
सिद्धजनमानसानां विस्मयजननी
घटेत मम भवतः ॥ ५ ॥

भवदिति । भवतोऽमलाः शुद्धा ये चरणाः ज्ञानक्रियादिमरीचयस्तेषु चिन्ता पुनः पुनर्निभालनं सैव सर्वसम्पत्प्रदत्वाद्रत्नलता, अलङ्कृता सम्प्राप्ततत्तदनेकशःशोभा, कदा मम पूर्णा सिद्धिर्घटेत भवतः सकाशात्कीदृशी सिद्धजनमानसानां योगिचित्तानां विस्मयजननी ॥ ५ ॥

कर्हि नाथ विमलं मुखबिम्बं
तावकं समवलोकयितास्मि ।
यत्स्रवत्यमृतपूरमपूर्वं
यो निमज्जयति विश्वमशेषम् ॥ ६ ॥

कर्हीति । व्युत्थानावस्थितस्येयमुक्तिः, कर्हि नाथ विमलं मुखबिम्बं परं शान्तरूपं, तव समवलोकयितास्मि साक्षात्करिष्यामि, अमृतपूरमानन्दप्रसरमपूर्वमलौकिकं लोकयितृलोक्यरूपं विश्वं निमज्जयति ॥ ६ ॥



ध्यातमात्रमुदितं तव रूपं
कर्हि नाथ परमामृतपूरैः ।
पूरयेत्त्वदविभेद विमोक्षा-
ख्यातिदूरविवराणि सदा मे ॥ ७ ॥

ध्यातमात्रमिति । त्वदविभेद एव मोक्षः भेदबन्धापगमः तस्याख्यातिरप्रथा तदीयानि दूराणि विवराणि गहनान्याकाङ्क्षामयानि गर्तानि, कर्हि कदा, मे ध्यातमात्रमुदितं चिन्तनानन्तरमेव विकसितं, तत्तव सम्बन्धि रूपं कर्तृ, सदा परमामृतपूरैरानन्दविसरैः, पूरयेदाप्लावयेत् ॥ ७ ॥

त्वदीयानुत्तररसासङ्गसन्त्यक्तचापलम् ।
नाद्यापि मे मनो नाथ कर्हि स्यादस्तु शीघ्रतः ॥८॥

त्वदीयेति । त्वदीयोऽनुत्तरो रसः परचित्प्रसरः तदासङ्गः तत्परत्वं तेनापि सन्त्यक्तचापलं गलितव्युत्थानम्, अद्यापीति असकृदास्वादितेऽपि समावेशे, कर्हि शीघ्रं स्यादित्यादि गाढोत्कण्ठापरत्वं सूचयति ॥ ८ ॥

मा शुष्ककटुकान्येव परं सर्वाणि सर्वदा ।
तवोपहृत्य लब्धानि द्वन्द्वान्यप्यापतन्तु मे ॥९॥

मेति । तवोपहृत्य लब्धानि चिन्मयत्वेन त्वय्यनुप्रविश्य व्युत्थाने समावेशसंस्काररसास्वादान्यासादितानि, परं सर्वकालं, सर्वाणि द्वन्द्वानि शीतोष्णादीन्यपि, आपतन्तु, शुष्ककटुकान्येव पुनस्त्वदद्वयस्पर्शामृतपूर्णत्वाद्रूक्षदुःस्वादप्रायाणि॥९॥

नाथ साम्मुख्यमायान्तु विशुद्धास्तव रश्मयः ।
यावत्कायमनस्तापतमोभिः परिलुप्यताम् ॥१०॥

नाथेति । सांमुख्यमायान्तु देहादिप्रथां निमज्य प्रस्फुरन्तु, शुद्धा अनुग्रहपरा, रश्मयः शक्तयः कायमनस्तापतमोभिरिति कायमनस्तापा एव तमांसि तैः, परिलुप्यतां समन्तान्नश्यताम् ॥ १० ॥

देव प्रसीद यावन्मे त्वन्मार्गपरिपन्थिकाः ।
परमार्थमुषो वश्या भवेयुर्गुणतस्कराः ॥ ११ ॥

देवेति । प्रसादः प्राग्वत्, त्वन्मार्गपरिपन्थिकाः परमार्थशाक्तभूमिप्रवेशरोधिनः, अत एव परमार्थं चिदभेदं मुष्णन्त्यपहरन्त्यनुपभोग्यं सम्पादयन्ति ये, गुणाः सत्त्वादय एव तस्कराः ते, वश्या भूयासुः, तदुक्तम् "गुणादिस्यन्दनिष्पन्दाः स्युर्ईस्यापरिपन्थिनः" इति प्रसीद, भूयासुरिति लोङ्लिङौ सम्भूय आशीर्विशिष्टां प्रार्थनां गमयतः, यथा लुनीहीत्यादौ लोड्वचने कर्मव्यतिहारादेवमन्यत्रापि स्मर्तव्यम्, स्वामिनि प्रसन्ने चौरा वश्या भवन्तीति लौकिकोर्थः स्पष्ट एव ॥ ११ ॥

त्वद्भक्तिसुधासारैर्मानससमापूर्यतां ममाशु विभो ।
यावदिमास्तुह्यन्ते निःशेषासारवासनाः प्लुत्वा॥१२॥

त्वद्भक्तीति । मानसं चित्तं सरश्च, असाराः कुत्सिताः, सरस्यप्यासारैः पूरिते असारवासनाः कट्टदकवासनाः, प्लुत्वोत्पत्य, स्वयमेव तुह्यन्ते बहिर्निःसरन्ति ॥ १२ ॥

मोक्षदशायां भक्ति-
स्त्वयि कुत इव मर्त्यधर्मिणोऽपि न सा ।



राजति ततोऽनुरूपा-
मारोपय सिद्धिभूमिकामज माम् ॥ १३ ॥

मोक्षेति। मोक्षदशा परमशिवता जीवन्मुक्तता तन्त्रोक्तप्रायता यदनेनैवोक्तम् "तामासाद्य दशां रूढा मुक्तकल्पा वयं तत" इति, मर्त्यधर्मिण इत्यप्रत्यभिज्ञातात्मस्वरूपस्य, अनुरूपामिति प्राग्वद्रुद्रशक्तिसमावेशमयीं, परमसिद्धिभूमिं तत्रैव प्रभुदासभावस्य स्फुटं स्फुरणात् ॥ १३ ॥

सिद्धिलवलाभलुब्धं
मामवलेपेन मा विभो मंस्थाः ।
क्षामस्त्वद्भक्तिसुखे
प्रोल्लसदणिमादिपक्षतो मोक्षः ॥ १४ ॥

सिद्धीति । समावेशात्मकपूर्णसिद्ध्यपेक्षया भेदमयाणिमादयः सिद्धिलवास्तल्लाभे लुब्धं मा मंस्थाः, अवलेपेनेति, मां सिद्धिलवलुब्धमाकलय्य मावलेपं कुर्या इति यावत्, ननु पारमेशनये साधकानां सिद्ध्युपभोगानन्तरं "भुक्त्वा भोगांश्शिवं व्रजेत्" इत्याम्नायेषु शिवतैव श्रूयते, तर्हि मन्दा रुचिरित्याशङ्क्य युक्तिमाह प्रोल्लसदणिमादिपक्षादनन्तरं यो मोक्षस्त्वद्भक्तिसुखे त्वत्समावेशानन्दस्य पुरतः, क्षामः अत्यल्पः ॥ १४ ॥

दासस्य मे प्रसीदतु
भगवानेतावदेव ननु याचे ।
दाता त्रिभुवननाथो
यस्य न तन्मादृशां दृशो विषयः ॥ १५ ॥

दासस्येति । एतावदिति न तु आणिमादि, प्रसीदतु

इति, त्रिभुवनं प्राग्वत्, यस्येत्यसम्भाव्यस्य फलस्य तत्फलं सदृशमिति न मादृशां दृश इति बुद्धेः ॥ १८ ॥

त्वद्वपुः स्मृतिसुधारसपूर्णे
मानसे तव पदाम्बुजयुग्मम् ।
मामके विकसदस्तु सदैव
प्रस्रवन्मधु किमप्यतिलोकम् ॥ १६ ॥

त्वदिति। पादाम्बुजयुग्मं प्राग्वत्, विकसद्भेदसङ्कोचमुज्झत्, मधु परमानन्दरूपं माधुर्यम्, अतिलोकमलौकिकं, रसपूर्णे च मानसे अम्बुजं विकसन्मधु स्रवति ॥ १६ ॥

अस्तु मे प्रभुरसौ जनकोऽथ
त्र्यम्बकोऽथ जननी च भवानी ।
न द्वितीय इह कोऽपि ममास्ती-
त्येव निर्वृततमो विचरेयम् ॥ १७ ॥

अस्त्विति । असाविति चिद्घनो मे प्रभुरनुग्राहकः जनकः प्रमातृतोल्लासकश्च त्र्यम्बकस्तथा भवानी पराशक्तिः जननी प्रभ्वी चास्तु, ईदृशस्यैव प्रत्यभिज्ञातमहेश्वरस्वरूपस्य मे इह जगति न द्वितीयः कोऽप्यस्ति, ममेति शेषे षष्ठी, इत्येव एतावतैव, निर्वृततमोऽत्यर्थं प्रमुदितो, विचरेयं विहरेयमिति शिवम् ॥ १७ ॥

इति श्रीमदुत्पलदेवाचार्यविरचितस्तोत्रावलावुद्योतनाभिधानैकोनविंशस्तोत्रे
श्रीक्षेमराजविरचिता विवृतिः ॥ १९ ॥



ॐ नाथं त्रिभुवननाथं
भूतिसितं त्रिनयनं त्रिशूलधरम् ।
उपवीतीकृतभोगिन-
मिन्दुकलाशेखरं वन्दे ॥ १ ॥

ॐ नाथमिति । त्रिभुवनं प्राग्वत्, भूतिर्विश्वमयी विभूतिस्तया सितं सम्बद्धं षिञ् बन्धने इत्यस्य सितशब्दः, त्रीणि इच्छाज्ञानक्रियाख्यानि नयनानि यस्य, भेदोद्दलनहेतोः प्रज्वलद्ज्ञानरूपस्य त्रिशूलस्य धारकम्, उप समीपे वीतीकृताः विशेषेणताः कृताः संहृताश्च भोगिनः प्रसरा येन, वीतः वी गतावित्यस्य प्रयोगः, इन्दुकला विश्वजीविनी चितिशक्तिः शेखरं मुख्यं रूपं यस्य, समग्रमेयमयी इन्दुकला वा स्वातन्त्र्यप्रथने हेतुत्वात् शेखरः क्रीडार्थमाहार्यं मण्डनं यस्य, तं वन्दे इति प्राग्वत्, बाह्यक्रमेण स्पष्टार्थः ॥ १ ॥

नौमि निजतनुविनिस्सरदंशुक-
परिवेषधवलपरिधानम् ।
विलसत्कपालमाला-
कल्पितनृत्तोत्सवाकल्पम् ॥ २ ॥

नौमीति । निजतनुश्चिन्मयं रूपं ततो विनिःसरन् स्फुरन् अंशुकपरिवेषो रश्मिपुञ्जप्रसर एव धवलं शुद्धं परिधानं प्रावरणं यस्य, प्रसरत्प्रकृतिः शिव इति स्थित्या स्वशक्तिचक्रेण सततमाश्लिष्टमित्यर्थः, विकसन्त्या स्वात्मनियोजनेन देदीप्यमानया विलसन्त्या स्फुरन्त्या कपालमालया सदाशिवादिसकलान्ताशेषप्रमातृमुण्डमालया कल्पितो नृत्तोत्सवे स्वातन्त्र्यविजृम्भाभ्युदय आकल्पो मण्डनं येन, बाह्यक्रमः स्पष्टः ॥ २ ॥

वन्दे तान् दैवतं येषां
हरश्चेष्टा हरोचिताः ।
हरैकप्रवणाः प्राणाः
सदा सौभाग्यसद्मनाम् ॥ ३ ॥

वन्दे इति । हरोचिताः सृष्टिसंहारानुग्रहादिरूपाः, हरैकप्रवणाः नित्यतत्समावेशरसिकाः, प्राणा जीवितमत एव सौभाग्यसद्मत्वं परमानन्दपूर्णत्वेन विश्वस्पृहणीयत्वात् ॥ ३ ॥

क्रीडितं तव महेश्वरतायाः
पृष्ठतोऽन्यदिदमेव यथैतत् ।
इष्टमात्रघटितेष्ववदाने-
ष्वात्मना परमुपायमुपैमि ॥ ४ ॥

क्रीडितमिति । समावेशस्फारेण जगत्क्रीडात्वेन पश्यतेयमुक्तिः । तव महेश्वरतायाः पृष्ठत एवोपर्येवान्यदिदं क्रीडितं, यथैतदिति प्रदर्शनार्थे, इष्टमात्रघटितेषु इच्छामात्रसम्पन्नेषु, अवदानेषु अद्भुतकर्मसु त्वदीयपञ्चविधकृत्यात्मसु चरितेष्वहमात्मना स्वयमेव, परिपूर्णमुपायं स्वबलाक्रमणमुखेऽपि प्राप्नोमि, त्वत्समावेशात्स्वं चिद्बलमाक्रम्य त्वद्वदहं पञ्चविधकृत्यकारी यत् तत्तवापरं क्रीडितमित्यर्थः, एवकारो भिन्नक्रमः ॥ ४ ॥

त्वद्धाम्नि विश्ववन्द्येऽस्मि-
न्नियति क्रीडने सति ।
तव नाथ कियान् भूया-
नानन्दरससम्भवः ॥ ५ ॥



त्वदिति । विश्ववन्द्यं यत्त्वद्धाम त्वन्महः तत्रान्तरियति विश्वात्मन्यस्मिन्नियति क्रीडने सति, तव भूयानिति अनल्पः, स्वानन्दानुरूपमेव सर्वः क्रीडति, यस्य चेद्विश्वं क्रीडा तस्य अपर्यन्त एवानन्द इति स्वात्मनस्तद्दासतया श्लाघां व्यनक्ति, अत एव नाथेत्यामन्त्रणम् ॥ ५ ॥

कथं स सुभगो मा भू-
द्यो गौर्या वल्लभो हरः ।
हरोऽपि मा भूदथ किं
गौर्याः परमवल्लभः ॥ ६ ॥

कथमिति । सुभगः सर्वस्य स्पृहणीयः, गौर्याः परस्याः शक्तेः, वल्लभः स्पृहणीयः स आनन्दघनः परया भट्टारिकयाऽऽलिङ्गित इत्यर्थः, हरः समावेशचमत्कारेण हृदयहारी द्वैतपदस्य संहर्ता च यः, परशक्तेः परमवल्लभ एव ॥ ६ ॥

ध्यानामृतमयं यस्य
स्वात्ममूलमनश्वरम् ।
संवित्लतास्तथारूपा-
स्तस्य कस्यापि सत्तरोः ॥ ७ ॥

ध्यानेति । यस्य समावेशशालिनः, स्वात्मनो मूलं कारणं, ध्यानामृतमयं स्वरूपगोपनोन्मुखचिदानन्दसारप्रत्यभिज्ञातशिवभट्टारकस्वरूपं, यथोक्तमास्ति 'प्रभुरसौ जनको वा' इत्यादि, अनश्वरं चिद्रूपतयैव नित्यं, तस्य कस्याप्यतिदुर्लभस्य सत्तरोः सन्तापहारिणः शोभनपादपस्य, संवित्लताः नीलसुखादिज्ञानानि तथारूपा इति ध्यानामृतमय्य एव ॥ ७ ॥

भक्तिकण्डूसमुल्लासा-
वसरे परमेश्वरः ।
महानिकषपाषाण-
स्थूणापूजैव जायते ॥ ८ ॥

भक्तीति । भक्तिर्भगवदनुराग एव वैवश्यदायित्वात्कण्डूस्तस्याः समुल्लासे, पूर्वनिर्णीता पूजैव, महानिकषपाषाणस्थूणा निघर्षोपलमयो महास्तम्भः, भक्तिकण्डूं यः प्रशमय्य आनन्दघनस्वात्मविश्रान्तिहेतुर्जायते इत्यर्थः ॥ ८ ॥

सदा सृष्टिविनोदाय
सदा स्थितिसुखासिने ।
सदा त्रिभुवनाहार-
तृप्ताय स्वामिने नमः ॥ ९ ॥

सदेति । "तदेवं व्यवहारेऽपि प्रभुर्देहादिमाविशन् । भान्तमेवान्तरर्थौघमिच्छया भासयेद्बहि" रिति स्थित्या देहादिमाविशतोऽपि भगवतः प्रतिक्षणं तत्तदनन्तग्राह्यग्राहकाद्याभाससंयोजनावियोजनक्रमेण सृष्ट्यादिहेतुत्वं च मया स्पन्दसन्दोहे वितत्य निर्णीतमिति स एवावेक्ष्यः ॥ ९ ॥

न क्वापि गत्वा हित्वाऽपि
न किंचिदिममेव ये ।
भवं त्वद्धाम पश्यन्ति
भव्यास्तेभ्यो नमो नमः ॥ १० ॥

नेति । एकान्तद्वादशान्तादिपदं परलोकं चागत्वा, भोगा-



नश्वरभूमीः शरीरं च त्यक्त्वा, इममेवाप्रबुद्धानां हेयाभिमतं, त्वद्धाम चिद्धनं ये पश्यन्ति, भव्याः दिव्यमहार्थदृष्ट्याविष्टास्तेभ्यो नमो नमः वीप्सयैषामेव परतत्त्ववित्वं ध्वनति ॥१०॥

भक्तिलक्ष्मीसमृद्धानां
किमन्यदुपयाचितम् ।
एतया वा दरिद्राणां
किमन्यदुपयाचितम् ॥ ११ ॥

भक्तीति । किमन्यदिति प्राप्तव्यस्य प्राप्तत्वान्नास्त्येवान्यद्याचितव्यं, किमन्यदिति परमार्थस्यानासादनात्किमन्येनासारप्रायेणेत्यर्थः ॥ ११ ॥

दुःखान्यपि सुखायन्ते
विषमप्यमृतायते ।
मोक्षायते च संसारो
यत्र मार्गः स शाङ्करः ॥ १२ ॥

दुःखानीति । व्ययमप्येतच्चिदानन्दघननिजबलाक्रमणादेव भवति, मार्गपदं शाक्तपदवाचकम् ॥ १२ ॥

मूले मध्येऽवसाने च
नास्ति दुःखं भवज्जुषां ।
तथाऽपि वयमीशान
सीदामः कथमुच्यताम् ॥ १३ ॥

मूले इति । प्राग्वत् व्युत्थानावस्थितस्योक्तिः, मूले मध्येऽवसाने इति, संविदुदयप्रसरविश्रान्तिषु सीदामः व्युत्थानेनाभिभूयामहे ॥ १३ ॥

ज्ञानयोगादिनाऽन्येषा-
मप्यपेक्षितुमर्हति ।
प्रकाशः स्वैरिणामेव
भवान्भक्तिमतां प्रभो ॥ १४ ॥

ज्ञानेति । प्रभो केषांचित् ज्ञानयोगक्रियाद्युपायैर्भवान् स्फुरति, भक्तानां पुनः स्वैरिणामुपायानपेक्षिणां त्वत्समावेशात्प्राप्तत्वन्महिम्नां च भवान्प्रकाशस्वभावः सदेति यावत् ॥१४॥

भक्तानां नार्तयो नाप्य-
स्त्याध्यानं स्वात्मनस्तव ।
तथाप्यस्ति शिवेत्येत-
त्किमप्येषां बहिर्मुखे ॥ १५ ॥

भक्तानामिति । आर्तयः क्लेशाः, आध्यानं प्राप्त्यभिलाषेण चिन्तनं, तव स्वात्मन इति स्वात्मतयैव स्फुरतः, तथापीति भक्तत्वादेव किमपीति परमानन्दैकात्म्यव्यञ्जकं निर्निमित्तं च ॥ १५ ॥

सर्वाभासावभासो यो
विमर्शवलितोऽपि सन् ।
अहमेतदिति स्तौमि
तां क्रियाशक्तिमीश ते ॥ १६ ॥

सर्वेति । अहमेतदिति अखिलं यः सर्वाभासाऽवभासः सदा विश्वेश्वरप्रकाशः, कीदृग् विमर्शेन परमानन्दचमत्कारेण वलितो बृंहितः, क्रियाशक्तिमीशशक्तिमीश ते, स्तौमि इति प्राग्वत् ॥ १६ ॥



वर्तन्ते जन्तवोऽशेषा
अपि ब्रह्मेन्द्रविष्णवः ।
ग्रसमानास्ततो वन्दे
देव विश्वं भवन्मयम् ॥ १७ ॥

वर्तन्ते इति । अपि ब्रह्मेन्द्रविष्णव इति सृष्टिस्थितिकारिणः प्रसिद्धाः आसतां रुद्रादयस्तेऽपि यावदशेषा जन्तवः क्षेत्रज्ञाः ग्रसमाणाः सदा स्वविषया अतिप्रवणा वर्तन्ते ॥ १७ ॥

सतो विनाशसम्बन्धा-
न्मत्परं निखिलं मृषा ।
एवमेवोच्यते नाथ
त्वया संहारलीलया ॥ १८ ॥

सत इति । हे नाथ, संहारक्रीडया एवमेवोच्यते मत्तश्चिदेकरूपात्परमुल्लासितस्वभावत्वादधिकमिव यत्किञ्चित्सदाशिवान्तं तन्मृषा न पृथग्भवतीत्यर्थः, यतः सतोऽनधिकस्याप्याधिक्येन आभासमानस्य विनाशेन सम्बन्धाच्चिदात्मन्येव विगलितत्वेन स्थितिर्भवति, तदुक्तम् "यत्सदाशिवपर्यन्तम्" इत्यादि "विनाशोत्पत्तिसंयुतम्" इत्यन्तं तथा "कार्यताक्षयिणी तत्र" इत्यादि॥१८॥

ध्यातमात्रमुपतिष्ठत एव
त्वदपूर्वरद भक्तिधनानाम् ।
अप्यचिन्त्यमखिलाद्भुतचिन्ता-
कर्तृतां प्रति च ते विजयन्ते ॥ १९ ॥

ध्यातमात्रमिति । मितयोगिभिश्चिन्तयितुमशक्यमपि यत्स्वरूपं

भक्तिधनानां ध्यातमात्रमुपतिष्ठते ध्यानसमनन्तरमेव सन्निधीयते इत्यर्थः, ते च भक्ताः आखिलायाः अद्भुतचिन्तायाः कर्तृतां प्रति विजयन्ते त एवासामान्यविस्मयप्रवर्तकाः सर्वोत्कर्षिण इत्यर्थः ॥१९॥

तावकभक्तिरसासव-
सेकादिव सुखितमर्ममण्डलस्फुरितैः ।
नृत्यति वीरजनो निशि
वेतालकुलैः कृतोत्साहः ॥ २० ॥

तावकेति । बाह्योऽर्थः स्पष्टः । वीरजनः विदारितसंसारमहापथः भक्तलोको, निशि मायामध्य एव, नृत्यति चिद्रिकासेन विलसतितराम्, कथं तावकभक्तिरसासवसेकात् त्वत्समावेशामृतसेकादिव, सुखितानि आनन्दनन्दितानि मर्ममण्डलानि पाशःसञ्चयास्तेषां सम्बन्धिभिः स्फुरितैरासनमुद्रासदृशैः वेतालकुलैःपथुहृदयाच्च दृकूप्रत्ययोदयानुवर्तिशक्तिशतैः, कृतोत्साहः परिपोषितचिदभ्युदय इति शिवम् ॥ २० ॥

आरब्धा भवदभिनति-
रमुना येनाङ्केन मम शम्भो ।
तेनापर्यन्तमिमं कालं
दृढमखिलमेव भविषीष्ट ॥२१॥

आरब्धेति । क्वचिदप्यसदृशशैलीदर्शनादनार्ष इवायं श्लोकस्तथाऽपि व्याख्यायते। अमुना चिदद्वयसमावेशोत्कर्षप्रदर्शिना, येनाङ्केन सर्वजनासंलक्ष्येण प्रकारेण, शम्भो तव स्तुतिरारब्धा, तेन प्रकारेणापर्यन्तमिममखिलं, कालं दृढमविचलं, कृत्वाऽसौ भविषीष्ट प्राप्नुयात्, भूमाप्राविवस्य रूपमिति शिवम्॥२१॥

इति श्रीमदुत्पलदेवाचार्यविरचितस्तोत्रावलौ चर्वणास्तोत्रे
विंशे श्रीक्षेमराजकृता विवृतिः ॥ २० ॥



ॐ तत्सत् । क्लेशान्विनाशय विकासय हृत्सरोज-
मोजो विजृम्भय निजं नरिनर्तयाङ्गम् ।
चेतश्चकोरचितिचन्द्रमरीचिचक्र-
माचम्य सम्यगमृतीकुरु विश्वमेतत् ॥ १ ॥
श्रुतिपथमितासूक्तिश्रेणी धुनोति भवातपं
निरुपमपरानन्दव्याप्तिं तनोति च तत्क्षणात् ।
इयमिति विभोः शम्भोर्भक्त्या परं परमेष्ठिनो
विहितललितव्याख्याऽस्माभिः कृतार्थिजनार्थितैः ॥२॥
विश्वत्रयेऽपि विशदैरसमस्वरूपैः
शास्त्रैस्तथा विवरणैः ग्रथितैव कीर्तिः ।
तस्माद्गुरोरभिनवात्परमेशमूर्तेः
क्षेमो निशम्य विवृतिं व्यतनोदमुत्र ॥३॥ ॐ तत्सत् ॥



